आद्यन्तके द्वयोर्विचार्यमाणत्वे अभेदानुभवस्य प्रसिद्धत्वात्। न च भेदाभेदयोर्विरोध इति वाच्यम्। वदतो व्याघातात्। भेदाभेदयोर्विरोध इति विवक्षोर्भेदाभेदज्ञाने विषयित्वसंबंधेन भेदाभेदाश्रयत्वस्य सत्वात्। अन्यथा विरोधस्फूर्तेरसंभवात्। तस्मात् भेदाभेदयोर्विरोधो न सार्वत्रिक इति वक्तव्यम्। अस्त्वेतद्विचारः।

"तदनन्यत्वमारंभणशब्दादिभ्यः" इति सूत्रार्थविचारे भेदाभेदयोर्विरोधपरिहारो निपुणतरं वक्ष्यते। तथा च पूर्वोक्तस्वाभाविकेच्छाशक्ति परिकल्पितमायाप्रमातृ जीवशिवभावरूपयोगस्य शासकत्वात्। अभयं प्रतिष्ठां विन्दते अथ "सोऽभयं गतो भवति" इत्यादि शास्त्रस्य आनन्दमय परशिव एवोपास्यो नत्वितरः। एतावत्पर्यन्तं पंचकृत्यकारित्वेन परशिवलिंगस्यैव जीवोपास्यत्वमित्युक्तम्। अतः परं सूर्यादिदेवोपास्यत्वमपि तस्यैवेत्याह। तथा अक्षिण्यादावपि शिवलिंगादिरूपेण स्थितस्यैवोपास्यत्वमित्याह च....।

## सू. अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

ननु "य एष अन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुंडरीकमेवाक्षिणी इत्यत्र य एष अक्षिणि पुरुषो दृश्यते" इत्यत्र च उपास्यवस्तुनो आधारश्रवणात्। हिरण्यश्मश्रुरित्यादिना रूपश्रवणाच्च। "अशब्दमस्पर्शं अरूपमव्ययम्।" इत्यादिना परशिवस्य रूपा-

भावावगमात्। तस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इत्यादिना स्वमहिमप्रतिष्ठितस्य परशिवस्य अनाधारत्वस्य श्रुतत्वात्। साधार सरूप एव यः कश्चित् परशिवातिरिक्तः उपास्य इति चेन्न। "अन्तस्तद्धर्मोपदेशात्" तस्य परशिवस्वधर्माणां स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यत्र "यथात्मा अपहतपाप्मा" इत्यादौ च "सैवर्क्तत्साम" इत्यादिना च सर्वपापाभाव सर्वात्मकत्वादीनां अन्तरुपदिश्यमानत्वात् एतादृश धर्माणां परशिवासाधारणत्वात्। चक्षुरन्तः पुरुषस्य परशिवातिरिक्तस्य सर्वात्मकत्वासंभवात्। आदित्य-मण्डलान्तर्वर्तिनः परशिवातिरिक्तस्य कस्यचित् सर्वपापरहितत्वासंभवात्। परशिवस्य सर्वकारणत्वात् सर्वात्मकत्वात् सर्वपापरहितत्वाच्च परशिव-लिंगस्यैवोपास्यत्वमिति सिद्धम्। परशिवस्य सर्वशक्तित्वात् भक्तानुग्रहार्थं घृतकठिन्यन्यायेन लीलाविग्रह परिग्रहसंभवात्। न श्रुत्युक्तरूपाद्युपन्यासो अन्यमुपास्यं बोधयति। इतश्च यथा पूर्वं जीवस्य जीवोपास्यत्वं भेदव्यपदेशादित्यनेन सूत्रेण निराकृतम्। तथा सूर्यादीनामपि सूर्याद्युपास्यत्वं न संभवतीत्याह —

सू. 'भेदव्यपदेशाच्चान्यः' ॥ २१ ॥

"य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः" इत्यादिना आदित्यादिशरीराभिमानिभ्यो देवेभ्यः अन्यस्य परशिवस्य

सर्वान्तर्यामिणः व्यपदिश्यमानत्वात्। तैरपि परशिव एवोपास्यः। अत्र देवैरप्युपास्यत्वं परशिवस्यैवेति सिद्धे किं:वक्तव्यं जीवोपास्यत्वं तस्यैवेति उपरिष्टादाशयः।

ननु "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशोह्येवैभ्योजायानाकाशः परायणम्" इत्यत्र आकाशशब्दस्य भूताकाशपरत्वात् तस्यैव लोकवेदयोः प्रसिद्धत्वात्। अवकाशदानेन भूतान्तरुत्पत्ति कारणत्वाच्च। "सं ब्रह्म" आकाश आत्मा "इत्यादौ आकाशस्यैव ब्रह्मत्वोपदेशात्" आत्मनः आकाशः संभूतः "इत्याद्युक्त आत्मजन्यत्वस्य आकाशस्य औपचारिकत्वात् जगज्जन्मादिकारणं भूताकाश एवेति चेन्न इत्यत्र हेतुमाह—

सू. "आकाशस्तल्लिङ्गात्" ॥ २२ ॥

अत्राकाशशब्दवाच्यशिव एव भवति। न भूताकाशः तल्लिंगात्। तस्य परशिवस्य जगज्जन्मादिकारणत्वादिलिंगात्। अचेतनभूताकाशे ईक्षणपूर्वकजगज्जन्मादिकारणत्वासंभवात्। आकाशाद्वायुरित्यादिश्रुतावपि आकाशाद्यनुप्रविष्ट ईशानादिसद्योजातान्त पंचब्रह्मात्मक परशिवकारणत्वस्य श्रूयमाणत्वात्।

किं च "सर्वाणि ह वा इमानि भूतानि" इत्यादिना उक्तजगदुभयकारणत्वस्य जडभूताकाशे असंभवात्। आकाशशब्दवाच्यं परं ब्रह्मैव धार्यं ध्येयमिति सिद्धम्। प्राणस्यापि तत्र तत्र जगज्जन्मादिकारणत्वस्य श्रूयमाणत्वात्। प्राणशब्दवाच्यत्वमपि ब्रह्मण इत्याह—

सू. "अत एव प्राणः" ॥ २३ ॥

"प्राणाध्येव खल्विमानि भूतानि जायन्ते" इति श्रुत्युक्तप्राणशब्दो न प्राणवायुपरः। अत एव "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्याद्युक्तसर्वभूतोद्गमनप्रवेशनलिंगात् ब्रह्मैव प्राणशब्दवाच्य इत्यर्थः ॥

ज्योतिश्शब्दवाच्यत्वमपि ब्रह्मण एवेत्याह—

सू. "ज्योतिश्चरणाभिधानाम्" ॥ २४ ॥

यद्यपि "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिना ज्योतिः पदवाच्यस्य द्युमर्यादत्वश्रवणात् सर्वगतस्य ब्रह्मणः द्युमर्यादत्वासंभवात् भौतिकज्योतिषः प्रसिद्धत्वाच्च सूर्यादेः ज्योतिः शब्दवाच्यत्वं भासते। तथापि चरणाभिधानात्। "पदोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" इत्यस्मिन् पूर्ववाक्ये यत्त्रिपाद्ब्रह्म निर्दिष्टं तदेव। "यदतः परः" इत्यत्र यच्छब्देन परामृश्यते द्युसंबंधस्य उभयत्रप्रतीतेः ज्योतिश्शब्दो ब्रह्मण्यपि वर्तते। "तद्देवाज्योतिषां ज्योतिरायुर्हो-

पासते" इत्यादि श्रुतिभिः सर्वगतस्यापि ब्रह्मणः उपासनार्थं द्युमर्यादत्वं न विरुध्यते। तस्मात् चरणाभिधानात् ज्योतिश्शब्दवाच्यं परं ब्रह्म भवतीत्यर्थः।

ननु "गायत्री वा इदं सर्वं भूतं यदिदं किंच" इति पूर्ववाक्ये गायत्र्याख्यस्य छन्दसः सर्वात्मकत्वाविधानात्। तदेव ज्योतिश्शब्देन उपदिश्यते इत्याशंक्य निराकरोति—

सू. छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण निगदात्
तथा हि दर्शनम् ॥ २५ ॥

पूर्ववाक्ये छन्दसः अभिधानात् न परशिवः ज्योतिश्शब्दवाच्यः इति चेन्न। तथा चेतोर्पणनिगदात्। गायत्र्याख्यछन्दोद्वारा चेतसि हृदयांभोजे अर्पणं परमशिवलिंगस्य धारणमित्यर्थः। "चेतोऽर्पणधारणं च हृदयांभोजमध्यमे" इति नीलकंठशिवाचार्योक्तेः तस्य धारणस्य "गायत्री वा इदं सर्वं" इत्यनेन निगदात् कथनात् इत्यर्थः। तथा हि दर्शनम्। यथा संवर्गविद्यायां "ते वा एते पंचान्ये पंचान्ये दशसंतस्तत्कृतम्" इत्युपक्रम्य सैषा विराट् इत्यत्र संख्यासामान्यात्। अर्थान्तरे प्रयुज्यमानस्यं छन्दोविधायिनश्शब्दस्य दर्शनम्। तथा संख्यासामान्यात् गायत्रीशब्देन साक्षात् ब्रह्मैव प्रतिपाद्यते। अक्षरावच्छिन्न गायत्र्याख्य छन्दसः सर्वात्मकत्वादिधर्मासंभवात्। संभवति च "पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि" चतुष्पदो ब्रह्मणः

षडक्षरैश्चतुर्भिः पादैः चतुष्पदया गायत्र्या संख्यासादृश्यम् । अतः गायत्रीशब्देन परमशिव एव निर्दिष्ट इति तस्यैव सर्वात्मकत्वसिद्धेः।

पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्मैवेत्याह—

सू. भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥

भूतपृथिवी शरीरहृदयैः "सैष षट्पदा षड्विधा गायत्री इति व्यपदेशः केवलस्य छन्दसः नोपपद्यते। ब्रह्मणः भूतादि पादव्यपदेशस्य उपपन्नत्वात्। पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म, तदेव ज्योतिर्वाक्येऽपि धर्मसंबन्धात् प्रत्यभिज्ञायमानं परामृश्यते।

ननु "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" इत्यत्र धर्मसंबन्धित्व प्रत्यभिज्ञानात्। "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यत्र दिवः परत्वद्योतनात्, कथमुभयोर्वाक्ययोः परमेश्वरपरत्वं इत्याशंकायामाह—

सू. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

उपदेशस्य "त्रिपादस्यामृतं दिवीति" सप्तम्यादौ द्यौरधिष्ठानत्वेन कथनस्य "यदतः परो दिवो ज्योतिरिति" वाक्ये दिवः परत्वस्य ज्योतिषः कथनस्य च भेदात् न यत् पूर्वस्मिन् वाक्ये प्रकृतं ब्रह्म तदेव ज्योतिर्वाक्ये प्रत्यभिज्ञायते इति चेन्न। उभयस्मिन् पंचम्यन्ते सप्तम्यन्ते च प्रत्यभिज्ञानस्य अविरोधात्। पूर्वापरमध्यपरा-

मर्शविरोधाभावादित्यर्थः। यथा लोके सौधाग्रे मयूरः सौधाग्रात् परो मयूर इति। अतः परमेव ब्रह्म ज्योतिश्शब्दवाच्यमिति सिद्धम्।

"अत एव प्राणः" इति सूत्रेण प्राणशब्दस्य परशिवपरत्वमुक्तम्। तथापि अनेकलिंगदर्शनात् अनेकोषां उपास्यत्वं माभूदित्याशयेन आह—

सू. प्राणस्तथानुगमात् ॥ २८ ॥

यद्यपि "मामेव विजानीहि" "इदं शरीरं परिगृह्योत्थापयति" "न वाचं विजिज्ञासीत् वक्तारं विद्यात्" इति वाक्यत्रयेण देवेन्द्र, प्राण, जीव, लिंगानां निर्दिश्यमानत्वात् प्राणशब्दो मुख्यप्राणाद्यर्थपरः इति ज्ञायते। तथापि प्राणः ब्रह्मैव; कुतः तथानुगमात् पौर्वापर्येण विचार्यमणे वाक्ये ब्रह्मप्रतिपादने पदानां समन्वयस्य उपपन्नत्वात् "यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्त हिततमत्वं ब्रह्मप्राप्तेरन्यस्य नोपपद्यते "तं मामायुरमृतमित्युपास्व" "स वा एष प्राण एव प्रज्ञानन्दो अजरो अमृतः इत्याद्युक्त आनन्दाजरामृतप्रज्ञात्मत्वादीनां परशिवातिरिक्तमुख्यप्राणादावसंभवात् प्राणशब्दोऽत्र ब्रह्मपरक एव।

पुनराशंक्य परिहरति—

सू. न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबंध भूमाह्यस्मिन् ॥ २९ ॥

न प्राणशब्दो परशिवपरः कुतः वक्तुः इन्द्रस्य आत्मोपदेशात्। "मामेव विजानीहीति" प्रतर्दनं प्रति स्वात्मनः उपदेशात्।

"आनन्दो अजरो अमृतः" इत्याद्युपसंहारोक्त आनन्दत्वादिधर्माणां तस्मिन्नेव देवताविशेषे कथंचिन्नेतव्यत्वात् इति चेन्न। हि यस्मात् अस्मिन् अध्याये अध्यात्म संबंधभूमा परमशिवसंबंध बाहुल्यं लक्ष्यते तस्मादिह्यर्थः। तथा च आदिमध्यावसानेषु परमशिवसंबंधस्यैव बाहुल्येन प्रतिपाद्यमानत्वात् ब्रह्मण एव प्रथमतरं हिततमत्वोपन्यासेनोपक्रान्तत्वाच्च, न देवताविशेषस्य विग्रहवतः प्राणशब्दपरत्वम्।

ननु कथं तर्हि "मामेव विजानीहि" इति वक्तुरात्मोपदेश इत्यत्राह—

सू. शास्त्रदृष्ट्यातूपदेशो वामदेववत् ॥ ३० ॥

वामदेववत् यथा वामदेवः "अनेन जीवेन आत्मनानुप्रविश्य नामरूपे व्याकरवाणीति" शास्त्रदृष्ट्या सर्वजगत्स्वरूपं परमेश्वरं पश्यन् "अहं मनुरभवं सूर्यश्च" इति सर्वात्मकत्वं स्वस्योपदिष्टवान्, तथा मामेव विजानीहीत्युपदेशः शिवयोगाभ्यासपाटवेन देवताविशेषस्य शिवभावमापन्नस्य "मामेव विजानीहि" इति "स्वात्मनस्सर्वात्मकत्वेनोपदेशो न विरुध्यते।" यत्र नान्यत् पश्यति नान्यत् श्रृणोति नान्यद्विजानाति" इति श्रुत्यनुसारेण भ्रमरकीऽवच्छिवोपासनया शिवत्वापन्नभक्तानां वस्तुतः शिवस्वरूपेण सर्वस्य ज्ञायमानत्वात्। शिवातिरिक्तस्य कस्यचित् गगनकुसुमायमानत्वात् सर्वं शिवमयं ज्ञात्वा मामेव विजानीहीत्युपदेशः।

किं च कृष्णावतारे अर्जुनं प्रति "वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः। ममैवांशो जीवलोको जीवभूतस्सनातनः॥" इत्यादीनि यथा शिवात्मत्वदृष्ट्या उपदिदेश तद्वदिन्द्रोपदेशो न विरुध्यते इति भावः।

"आनन्दो अजरो अमृतः" इत्याद्युपसंहारोक्त आनन्दत्वाजरत्वामृतत्वादीनां धर्माणां परशिवासाधारणत्वात् उपक्रातार्थजालस्य परशिवविषयकत्वेन सुदृढं प्रतिपादयितुमाह—

सू. जीवमुख्यप्राणलिंगान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥

जीवमुख्यप्राणलिङ्गात् "वक्तारं विद्यात्" "प्राण एव प्रज्ञातेदं शरीरं परिगृह्य उत्थापयति" इत्यत्र जीवमुख्यप्राणप्राणयोः लिङ्गाद्धेतोः जीवमुख्यप्राणावेव उपास्यौ न परशिव इति चेत् न आश्रितत्वात्। "न प्राणेनापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवति यस्मिन्नेतावुपाश्रिताविति" प्राणव्यापारस्यापि परमशिवाधीनत्वात् यस्मिन्नेतावुपाश्रितावित्यनेन प्राणापानयोः परशिवाश्रितत्वोक्तत्वात् "नोपास्यौ प्रकृतिजीवौ" इत्यत्र जीवाद्युपासनस्य निरस्तत्वाच्च। इह अस्मिन्नध्याये तद्योगात् तस्य परशिवस्य योगात् तदसाधारण धर्मबाहुल्येन संबंधात् तस्यैव उपासा त्रैविध्यात् हृदब्जद्वादशान्तमध्यस्थानेषु उपासनायाः परशिवोपासनस्य त्रैविध्यात् त्रिविधत्वस्य तत्र तत्र श्रूयमाणत्वात् "हृदब्जे वा द्वादशान्ते भ्रूमध्ये वाथवा शिरे।

ध्यायेन्मुक्त्यै सदा देवं त्रिविधोपासनं स्मृतम् ।" इति कारिकया नीलकण्ठशिवाचार्येण "उपासा त्रैविध्या" इत्यस्य सूत्रघटकस्य अर्थस्य संगृहीतत्वात् । निर्वाणमन्त्रिणा प्राणधर्मेण प्रज्ञात्मधर्मेण स्वधर्मेण च उपासनायाः यत्त्रिविधत्वं शंकरभगवत्पादाचार्येण अथवेत्यादि ग्रन्थेन अभिप्रेतमुक्तम् , तन्मूलविरुद्धमित्याभाति । अस्मिन् अन्य धर्मावगाहि बुद्धेः भ्रमत्ववत् अन्योपाधिद्वयधर्मावगाहि अन्य परशिवो- पासनायाः भ्रमत्वापत्तेश्च । इष्टापत्तौ शुक्तौ रजतभ्रमानन्तरं रजतार्थिनः रजतप्राप्त्यभाववत् अनपेक्षितशुक्तिप्राप्तिवच्च । मुमुक्षोश्शिवभावप्राप्ति- रूपमोक्षाभावप्रसंगः । शिवातिरिक्त प्राणादेरुपासनस्य कुत्राप्यविधीय- मानत्वात् जन्मादिकारणत्वादिना स्वधर्मेण शिवस्यैवोपास्यत्वं सिद्धम् । जगज्जन्मादिकर्तृत्वानुमित सर्वज्ञत्वादिधर्मविषयकोपासनाया एव स्वशक्तिसंकोचप्रयुक्त किंचिज्ञत्वादि निवर्तकत्वात् । "एषोऽन्यत्र तृटेः पातः प्रोक्तस्सर्वज्ञतादिभक् " इति रहस्यस्तोत्ररीत्या जीवस्य तृटिपाते सर्वज्ञत्व सर्वकर्तृत्व सर्वेशत्वादि विषयकोपासनया तृटिपातेत्यर्थः सर्वज्ञत्व सर्वकर्तृत्व सर्वेशत्वादिभाग्जीवो भवति । एष च विषयो गुरूपदेशेनादरात् परीक्ष्य । अत एवोक्तम्—"यस्सर्वज्ञस्सर्वविदिति" यः उक्तोपासनया सर्वज्ञः सः सर्ववित् सर्वसाक्षिसर्वाधिष्ठानरूप शिव एवेत्यर्थः ।

किंच "अहमन्नमहमन्नमहमन्नादोऽहमन्नादोऽहमन्नादः" । इति श्रुतिरपि शिवभक्तिविजृंभित शिवभावापन्नस्य सर्वात्मकशिवस्वरूपं व्यनक्ति । एषा रीतिरग्रे स्फुटीभविष्यति । जीवप्राणधर्मेण उपासनाया

जीवत्वप्राणत्वापत्या तद्विषयकोपासनायाः निष्प्रयोजनत्वात् प्राणधर्मेण प्रज्ञात्मधर्मेण च उपासनायास्त्रिविधत्वपूरणं विचारणीयम् ! अतः प्रर्वोक्त नीलकण्ठशिवाचार्योद्दत त्रैविद्यमेव उपासनायां वक्तव्यम् ।

अथवा "मामेव विजानीहि" "प्राणोऽस्मि प्रज्ञातं ममायुरमृतमित्युपास्व" इति श्रुत्या । परमशिवकलानुस्यूत बाह्यप्राणलिंगस्य उपदिश्यमानत्वात् स्वार्चकभक्तानां प्राणनहेतुत्वात् । तस्यैव प्राणशब्दवाच्यत्वात् अन्योपासनया किमित्याशंक्याह—"जीवमुख्यप्राणलिंगान्नेति चेन्नोपासा त्रैविध्यादाश्रितत्वादिह तद्योगात्" ॥

"यावदस्मिन् शरीरे प्राणो वसति तावदायुरिति" "प्राणो वै बलम्" "प्राणोऽस्मि प्रज्ञातं ममायुः" इत्यादिषु परिच्छिन्न जीवमुख्यप्राणलिंगस्य निर्देशात् सर्वव्यापकपरशिवोपासन न इति चेन्न । इष्टापत्तेः । कुतः उपासात्रैध्यात् इष्ट-प्राण-भाव संज्ञिक परशिवब्रह्मोपासनात्रयस्य अंगीकृतत्वात् । इह अस्मिन् वाक्ये तद्योगात् तस्य उपासनात्रयस्य स्थूलारुन्धती न्यायेन करतलामलकवत् स्वशक्तिप्रसरावच्छिन्न षट्स्थलपरिपूर्ण सच्चिदानन्दपरशिवसाक्षात्कारस्य साधनत्वेन संबंधात् । अत एव तस्य आश्रितत्वात् उपयुक्तत्वादित्यर्थः । प्राणोऽस्मीत्यादि वाक्ये स्थूलशरीरावच्छिन्न मुरूयेष्टलिंगधर्मबाहुल्यात् इष्टलिंगोपासनम् ।

मध्ये "एष एव साधुकर्मकारयतीति" प्राणलिंगधर्मबाहुल्यस्य सर्वकर्मकारयितृत्वादेः श्रवणात् लिंगोपासनम् ।

उपसंहारे " रथस्य रेषु नेमिरर्पिता नाभावरार्पिता " इत्यादिना भावलिंगधर्मभूयस्त्वावगमात् भावलिंगोपासनं चेतत्रयस्य उपक्रमोपसंहारमध्यवाक्यैर्विधीयमानत्वात् तद्वाक्यानां परमशिवान्यपरकत्वे पूर्वापरमध्यवाक्यपरामर्शविरोधप्रसंगात् आनन्दचिदात्मनां इष्ट-प्राण-भावलिंगानां उपासनात्रयस्य मुख्यत्वेन अनुभवसूत्रादौ निगदितत्वात् इष्टप्राणभावलिंगोपासनात्रयमेव शिवप्रसादसंप्राप्तशिवज्ञानसंपन्नबादरायणेन उपासा त्रैविध्यादित्यनेन सूचितं इति वक्तुं शक्यते। नोपास्यौ प्रकृति जीवौ " इत्यादौ जीवाद्युपासनस्य निषिद्धत्वात् निर्विशेषस्य ब्रह्मणः उपासना संभवात्।

किंच—" तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयस्यान्ते विश्वमायानिवृत्तिः " इत्यादौ पंचम्यन्तपदत्रयेण यथाक्रमं प्राणलिंग इष्टलिंगभावलिंगोपासनात्रयस्य स्पष्टमुक्तत्वात्। अन्यत्र प्राणव्यापारजीवयोः ब्रह्माधीनत्वावगमात् धारणार्चनार्पणात्मक उपासनायोग्यत्वात् जीवसकलाभीष्टप्रदायकत्वाच्च जीवमुख्यत्वं स्वेष्टलिंगस्यैव। जीवमुख्येष्टशब्दयोः लिंगब्रह्मयोरिव पर्यायत्वात्। उक्तं च शंकरसंहितायां जीवस्य प्राणलिंगमुख्यत्व " शिष्यदेहे ततश्शक्तिपातं कृत्वा स्वविद्यया। पीठस्थ शिवलिंगे तु शिष्यप्राणं निधाय च॥ लिंगं संस्थाप्य तत्प्राणे प्राणलिंगं भवेत्ततः। दत्वा शिष्याय तल्लिंगं श्रद्धाभक्तियुताय सः। न त्यज प्राणलिंगं त्वं यावज्जीवं प्रतिज्ञया। पुनर्भवं न ते वत्स विद्यते मातृयोनिषु॥ " उक्तं च सिद्धान्तागमेऽपि—" शिष्यस्य प्राणमादाय लिंगे तत्र निधापयेत्। तल्लिंगं तु स तत्प्राणे स्थापयेदेकभावतः॥

एवं कृत्वा गुरुर्लिंगं शिष्यहस्ते निधापयेत् । प्राणवद्धारणीयन्तु प्राण-लिंगमिदं तव ॥ कदाचित् कुत्रचिद्वापि न वियोजय देहतः " ॥ अत एव शिवेनापि "शरीरवृत्तिर्व्रतम्" इति सूत्रितम् । तेन शरीरस्थ स्थूलसूक्ष्मकारणापरपर्याय त्यागांग, भोगांग, योगांगत्रयस्य वृत्तिः यावत्पर्यन्तं वर्तनं तावत्पर्यन्तं व्रतं विराड्हिरण्यगर्भ ईश्वरापरपर्याय इष्ट-प्राण-भावलिंगत्रयधारणात्मकं व्रतं इत्यर्थो लभ्यते । तथा च सूत्रघटक उपासात्रैविध्यादित्यनेन इष्ट-प्राण-भावोपासनात्रयमेव । कथितं च "यस्य लिंगार्चनेनैव व्यासस्सर्वार्थवित्तमः" इति सूतसंहितोक्तेः । शिवसूत्रशिवभक्तव्याससूत्रयोरेकार्थत्वस्य वक्तव्यत्वावश्यकत्वात् । तस्य शिवभक्तत्वे शिवपुराणं, काश्यां तत्स्थापितशिवलिंगमपि निर्दशनमिति बोध्यम् ।

किंच—श्रुत्यन्तरेऽपि परमेश्वरस्य लिंगत्रयात्मकत्वं स्पष्टमुपदिष्टम् । "सर्वाननशिरोग्रीवस्सर्वभूतगुहाशयः । सर्वव्यापी च भगवान् तस्मा-" "सर्वगतश्शिवः ।" "इष्टमूर्जं तपसामनुयच्छति सर्वदा । तत्प्राणे-ष्वन्तर्मनसो लिंगमाहुः । भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् । इत्यादि श्रुतिशतेन इष्ट-प्राणभावलिंगत्रयोपासनात्मकधारणस्य शरीरत्रयवर्तनपर्यन्तं स्थायित्वा-भ्युपगमात् पूर्वोक्ततादृशसूत्रार्थस्य युक्तत्वम् । "प्राणोऽस्मि प्रज्ञातम्" इत्याद्युपक्रमोपसंहारमध्यवाक्यानां परमशिवैकपरत्वनिर्णयस्य उचिततरत्वात् इतरेषां मुक्तिप्रदायकत्वाभावात् परमशिवप्रकरणत्वाच्च प्राणशब्दोत्र परशिवब्रह्मणि वर्तते इति राद्धान्तः । नचास्यापि नीलकण्ठशिवाचार्या

नभिप्रेतत्वमिति वाच्यम् । "प्राणादप्यधिकं लिंगम् यस्मात् श्रेयः परं भवेत् ।" तत्प्राणलिंग मोक्षार्थी विदध्यात् हृदयांबुजे । इत्यनेन एतत्सूत्रव्याख्यानावसरे तदुक्तश्लोकेन तदभ्युपगतत्व निर्णयात् ।

अस्मिन् पादे मोक्षप्रयोजनाय शक्तिविशिष्टं लिंगरूपं ब्रह्म प्रथमसूत्रेणोपास्यत्वेनोपदिष्टं उपासनायाः उपास्यनिष्ट किंचिद्गुणविषयकत्वनियमात् । द्वितीयसूत्रेण प्रथमोद्दिष्टस्य काचिदसाधारण गुणानि दर्शितानि । तृतीयचतुर्थसूत्राभ्यां शास्त्रस्य यत्किंचित् तन्माहात्म्यप्रकाशकत्व समस्तवेदान्तानां उद्दिष्टब्रह्मणि समन्वयौ दर्शितौ । 'ईक्षतेर्नाशब्दमित्यादिना श्रुतत्वाच्चेत्यन्तेन सूत्रेण प्रधाने तल्लक्षण नातिव्याप्तं इति दर्शितम् । आनन्दमयोभ्यासात्' इत्यादिना 'शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यन्तेन सूत्रेण परशिवातिरिक्तेषु तल्लक्षणाभावात् तेषां मोपास्यत्वमित्युक्तम्' । जीवमुख्यप्राणलिंगान्नेतीति सूत्रेण प्रथमसूत्रोपक्रान्त परशिवलिंगोपासनस्य इष्टप्राणभावलिंगरूपावगाहितया त्रैविध्यमुक्तमिति सूत्रतात्पर्यपर्यालोचनेन प्रस्फुटं स्फुरति ।

इति श्रीमच्छिवाद्वैतप्रतिपादिकायां शाकर्यां वृत्तौ समन्वयाध्यायस्य प्रथमः पादः समाप्तः ॥

————

## अथ द्वितीयः पादः

अस्मिन् प्रथमसमन्वयाध्याये परस्यैवामिततेजसः लिंगस्य सर्ववेदान्तानां प्रतिपादकत्वेन समन्वयस्य वक्तव्यत्वात् अस्मिन् पदेऽपि षट्स्थलात्मकपरमशिवलिंगोपासनमेव प्राधान्येन विचार्यते ।

ननु "सक्रतुं कुर्वीत मनोमयः प्राणशरीरः" इत्यत्र मनोमयत्वादि धर्मविशिष्टत्वात् जीवस्यैवोपास्यत्वमिति चेन्न—

### सू. सर्वत्रप्रसिद्धोपदेशात् ॥ १ ॥

"सर्वं खल्विदं ब्रह्म तज्जलानि शान्त उपासीत" अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति । तथेतः प्रेत्य भवति सक्रतुं कुर्वीत । मनोमयः प्राणशरीरः भारूपः सत्यसंकल्पः आकाश आत्मा सर्वकर्ता सर्वकामः" इत्यत्र उपक्रमे सर्वत्रप्रसिध्या सर्वात्मकपरमेश्वरस्य उपासनाया विधायमानत्वात् कथं जीवस्योपास्यत्वेनाशंका इति चेन्न । सर्वं खल्विदमिति वाक्येन उपादानोपादेययोरभेदात् इदं सर्वं ब्रह्मैवेति ब्रह्मत्वेनोपासनस्य निर्दिष्टत्वात् तदन्तर्गताजडजीवस्यापि ब्रह्मत्वेनोपासनायाः प्राप्तत्वात् तस्यैव मनआदिभिस्संबंधात् परस्य तदभावात् "अप्राणो ह्यमनाश्शुभ्रः" इति श्रुतेः तस्योपास्यत्वशंका संभवति । अतस्तन्निवारणार्थं सर्वत्र प्रसिद्धोपदेशादिति सूत्रमुक्तम् ।

तथा च उपक्रमवाक्यनिर्दिष्ट उपास्येष्टलिंगात्मकविराजउपासनायां शान्तोऽर्थात् रागादिदोषरहितो भवति ।

एवं च "सर्वं खल्विदं ब्रह्मे"ति वाक्येन इष्टलिंगोपासनमुक्तम् । 'मनोमयः प्राणशरीरः' इत्यनेन तु प्राणलिंगोपासनम् । प्राणाः शरीरं यस्य सः प्राणशरीरः । प्राणशब्देन प्राणोपलक्षितसूक्ष्म-शरीरात्मकम गांगमित्यर्थः । तच्छरीरत्वं तदभिमानिनो हिरण्यगर्भात्मक प्राणलिंगस्य तस्य मनोग्राह्यत्वात् मनः प्राचुर्यार्थक मनोमयत्वमित्यर्थः ।

ननु परमेश्वरस्य 'अप्राणो ह्यमनाश्शुभ्रः' इति श्रुत्या 'यन्मनसा न मनुते' इत्यादि श्रुत्या मनस्संबन्धत्वाभावावगमात् कथं तस्य मनोमयत्वं तादृश श्रुतीनां "भावग्राह्यमनीडाख्यं" इत्यादि श्रुतिप्रसिद्ध भावलिंगपरकत्वात् "मनसैवानुद्रष्टव्यम्, मनसैवेदमवाप्तव्यं दृश्यतेत्वग्रया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः" बुध्यालोकनसाध्येऽस्मिन् वस्तुन्यस्तमितां यदि । बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव" इत्यादि श्रुतिस्मृतीन मनोग्राह्य प्राणलिंगपरकत्वात् । "मनोमयः प्राणशरीरः" इत्यत्रापि प्राण लिंगमेव इष्टलिंगोपासनाधिकफलाय उपास्यत्वेनोपदिष्टम् । अग्रे "भारूप-स्सत्यसंकल्पः" इत्यादि वाक्येन तदधिकफलाय कारणशरीरयोगांगाभिमानि भावलिंगोपासनमपि निर्दिष्टम् । तस्माद्दिष्टादिरूपेण जीवमुख्येति सूत्रप्रतिपादित परशिवब्रह्मोपासनस्य सिद्धत्वात् न जीवस्योपास्यत्वम् ।-"सर्वं खल्विदं ब्रह्म" इत्यादिना तत्तल्लिंगोपासनाया एव सिद्धत्वात् तद्धारणानौचित्यमिति चेन्न । समाधि शब्दित उपासनायाः तद्धारणं

विना अनुपपत्तेः बाह्याभ्यन्तरोपास्य स्वरूपधारणाभावे तदुपासनाया असंभवात् ।

ननु प्राणाधिकरणे अस्य सिद्धत्वात् पुनः किमिति चेन्न । प्राणाधिकरणे त्रिविधलिंगोपासनाविधिरेव साधिता अत्र पुनः स्पष्टार्थम् । ईक्षत्यधिकरणे प्रधानजगत्कारणत्वं निरस्तमपि "चमसवदविशेषा" दित्यादिना पुनर्निराकरणवत् बाह्यलिंगधारणं पुनर्निर्दिश्यते ।

श्रुत्यन्तरेऽपि—"दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यम्" इत्यनेन ज्योतिर्लिंगानुसंधानमिति निर्दिश्य "यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः तस्य प्रकृतिलीनस्य यः परस्स-महेश्वरः" इत्यादिना अनुसंधेयः । स्वरूपमुक्त्वा "निधनपतये नमः" इत्यादिना लिंगस्य सर्वात्मकत्वमुपदिश्य "एतत्सोमस्य सूर्यस्य सर्वंलिङ्गाँ स्थापयति पाणिमन्त्रं पवित्रम्" इत्यनेन इष्टलिंगधारणं विधीयते । उक्तं च लैंगे—"वेदेषु शास्त्रसंघेषु पुराणेष्वागमेषु च । ब्राह्मणस्य समाख्यातं लिंगधारणमुत्तमम्" इत्युपक्रम्य "यजुरप्याह सर्वं वै लिंगं स्थापयतीति च । तस्माद्धार्थं महालिंगं पाणिमन्त्रेति मन्त्रतः ॥ पाणौ लिंगं विनिक्षिप्य दीक्षाकाले गुरुश्शिवम् । येन स्मरति तन्मन्त्रं पाणिमन्त्रं वदन्ति हि । पवित्रत्वान्महेशस्य शिवस्य प्रतिपादनात् पवित्रीकरणात् पुसां पवित्रमिति कथ्यते । तस्मात् सर्वेषु कालेषु धारयेल्लिंगमुत्तमम् । गच्छन् तिष्ठन् स्वपन् जाग्रदुन्मिषन्निमिषन्नपि ।

शुचिर्वाप्यशुचिर्वापि लिंगं सर्वत्र धारयेत् । लिंगधारी सदा शुद्धो निजलिंगं मनोहरम् । अर्चयेद्गन्धपुष्पाद्यैः करपीठे समाहितः" ।

अपि च तत्स्वरूपं सिद्धान्तशिखोपनिषदि "गणवंशश्चेशानतस्यात्" इत्यनेन गणवंशानां ईशानमुखाविर्भूतत्वं प्रदर्श्य तेषां न सूतकादि स्पर्श इति वक्तुं "अत्याश्रमित्वात् गणवंशजानां लिंगागसंगिनां तथैव न सूतक वाप्यशुचित्वम् । एषां गच्छं स्तिष्ठन् निमिषन्नुन्मिषन् वा स्वपन् जाग्रन् लिंगधारी शुचिस्यात्"। इति निर्दिष्टम् ।

अथ च तत्रैव "न तत्रोच्छिष्टं भुंजते शुद्धदेही । शीर्षे कण्ठे वक्षसि कुक्षिदेशे नाभौ हस्ते सर्वदा प्राणलिङ्गं धार्यं यथा संप्रदायं गुरोर्विदित्वा हृदये मुख्यमुक्तम् ।" इत्यादिना बाह्यलिंगधारणं, लिंगधारिणः सूतकाभाववत्वं च त्रैकालिकमुक्तम् । तत्र जाग्रत्काले सूतकाभावस्य अव्याप्यवृत्तित्वे मानाभावात् पूर्वोक्त श्रुतिविरोधाच्च । तत् श्रुत्या सूतकाभावस्य व्याप्यवृत्तित्वावगमात् । दीक्षया प्रबलमलत्रयस्यैव उध्वस्तत्वे सूतकसद्भाव कथं संभवतीति विचारणीयम् ।

किं च शैवदीक्षानन्तरं प्रेतत्व जीवत्व सत्वे तस्या आनर्थक्यं तदभावे कस्य दोष स्पर्श इति प्रष्टव्यो सूतकसद्भाववादी । केचिन्मूढाः शिवदीक्षानन्तरं प्रेतस्य जीवत्वाभावेऽपि शिवागमेषु शैवानां स्ववर्णाश्रमोचित पूर्वापरकर्मकर्तव्यतया विधेयत्वात् अकरणे प्रत्यवायदर्शनाच्च विधिविहित यावत्कर्मानुष्ठानं कर्तव्यमेवेति वदन्ति । तेषामिदं

मौढ्यम् । विधिविहितयावत्कर्मानुष्ठानस्य ब्रह्मणाप्यशक्यत्वात् । "न हि कर्मणि कर्मान्तरारम्भः" इति न्यायविरोधात् । प्रयोजनाभावे मन्दस्यापि प्रवृत्त्यदर्शनात् लिङ्गधारिणः प्रयोजनाभावस्य स्वप्रयोजनाभावेऽपीत्यादिना ग्रन्थेन तैरेव स्वीकृतत्वात् । सनकादेर्यावत्कर्मानुष्ठानराहित्यकृत अवैदिकत्वापत्तेः । "कर्मणो गहना गतिः", "यावतां समनुष्ठानं सप्तसागरशोषणम्" इति यावत्कर्मानुवर्तनस्य कैरप्यशक्यत्वात् । कर्मणां संकल्पाधीनत्वेन संकल्पविरोधे प्रायश्चित्तविधानात् । संकल्पिताश्रयेणाश्रमधर्मोऽनुष्ठेयः । यथा ब्रह्मचारीगृहस्थाश्रमस्वीकाराभावे तद्धर्मानपि नार्हति । गृही वनस्थाश्रमधर्मान् वनस्थो यतिधर्मान् तथा अत्याश्रमी वीरशैवो नाश्रमधर्मानर्हति । विभूत्यादींस्तु अत्याश्रमधर्मान् अर्हति । "धर्माननुतिष्ठेत" इत्यस्य स्वस्वाश्रमविहितधर्मविधायकत्वात् । तादृशधर्मानुष्ठातुरेव चित्तनैर्मल्यद्वारा ब्रह्मविचारार्हत्वात् नोपनयनाद्यग्निष्टोमादिधर्मानुवर्तनापेक्षा । एतेन शैवदीक्षितानां कर्मकरणे प्रयोजनाभावेऽपि शिवाज्ञापालनार्थं अवश्यं कर्तव्यमेवेति तैरुक्तमपि प्रत्युक्तम् ।

न च वेदबोधितकर्तव्यताज्ञानात् उपनयनाग्निष्टोमादौ प्रवृत्तिस्संभवतीति वाच्यम् । स्वप्रयोजनसाधनत्वाभावे प्रवृत्तेरसंभवात् । न तु वेदबोधित कर्तव्यताज्ञानात्प्रवृत्तिः संभवति । स्वेष्टसाधनत्वमविज्ञाय तादृशकार्यताज्ञानसहस्रेणापि प्रवृत्तेरसंभवादिति श्री विश्वनाथपंचाननभट्टाचार्येणाप्युक्तम् । बसवेश्वरेणापि शिवदीक्षासंपन्नस्य उपनयन-

अग्निष्टोमादि कर्मानुवर्तने प्रयोजनाभावात् अंगीकृतकर्मपरित्यागापेक्षया "अनंगीकरणं वरम्" इत्यादिना कर्मोपनयनं बहुधा निरस्तम् ।

अस्त्वेतत् तत्र तत्र स्फुटीभविष्यति प्रकृतमनुसराम: । सर्वत्र श्रुत्यागमपुराणादिषु परमशिवलिंगस्य धार्यत्वेन उपास्यत्वेन च प्रसिद्धत्वात् न जीवस्योपास्यत्वम् ।

अस्मिन् अर्थे पुनर्हेत्वन्तरमाह ----

सू. विवक्षितगुणोपपत्तेश्च ॥ २ ॥

विवक्षितानां वक्तुमिच्छाविषयीभूतानां गुणानां "सत्यसंकल्पः आकाशआत्मा सर्वकर्ता सर्वकामः" इत्यादि श्रुत्युक्त सत्यसंकल्पत्व व्यापकत्व सर्वकर्तृत्व सर्वकामत्वादीनां उपपत्तेः ब्रह्मोपासनाविषयत्वेनैव उपपन्नत्वात् इति सूत्रार्थः ।

ननु अपौरुषेय वेदे वक्तुरभावात् इच्छार्थः कथं संभवतीति चेन्न । प्रपञ्चमात्रं प्रति बहुस्यामितीच्छया विमर्शशक्तेः कारणत्वेन नामप्रपञ्चं प्रत्यपि कारणत्वात् 'तस्माद्यज्ञात्सर्वहुतः, ऋचस्सामानि जज्ञिरे, छन्दांसि जज्ञिरे" इत्यादि श्रुतेः ॥ "नीरूपनित्यया वाचा" इत्यादि वेदनित्यत्व बोधकानां पूर्वसाम्येन प्रवाहरूपेण स्वेच्छया आविर्भावमात्रपरकत्वात् । वेदस्य जीवाजन्यत्वमात्रेणापि अपौरुषेयत्व-सम्भवात् । तथा चोक्तं आगमरहस्यस्तोत्रे ---" साक्षाद्भवान्यदि विधाय

न मूर्तिमाद्यम् । तत्वं निजं तदवदिष्यदतोऽतिगुह्यम् । नाज्ञ स्यत-त्रिभुवनं ुवमन्धमूक । कल्पं समस्तमसमंजसतामयास्यत् ॥" उक्तं च षाड्गुण्यविवेकेऽपि "साक्षत् त्वमेव वा शास्त्र त्वदीयैव हि सा मतिः । शब्दद्वारेण संक्रम्ह संस्करोत्यविकारिणः ॥" इति शास्त्रशास्त्रोः उपादेयोपादानयोः तादात्म्यम् । तथा च मुमुक्षोरुपासनायां सर्वां कर्तृत्वादीनामेव परशिवगुणानां विवक्षितत्वात् । किञ्चित्कर्तुत्वादीन' जीवगुणानां अविवक्षितत्वात् । अन्यत्रापि "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वैं नमो नमः ॥:' इत्यादिना शिवासाधारणधर्मश्रवणाच्च तस्यैव धार्यत्वं ध्येयत्वमिति सिद्धम् ॥

परशिवोपासनायां विवक्षितगुणानां उपपत्तिमुक्त्वा किञ्चित्कर्तुत्वादि विशिष्टस्य उपास्यत्वे तेषामनुपपत्तिमाह—

सू. अनुपपत्तेस्तु न शरीरः ॥ ३ ॥

तु शब्दोऽवधारणार्थः परशिवस्यैवोपास्यत्वं न शरीरस्य किञ्चित्कर्तु-अनुपपत्तेः सर्वकर्तृत्वादीनां विवक्षितानां अनुपपत्तेरित्यर्थः ।

इतश्च न तस्योपास्यत्वमित्याह—

सू. कर्मकर्तुव्यपदेशाच्च ॥ ४ ॥

"एतमितः प्रेत्य अभिसंभवितास्मि" इत्यत्र शिवोपासनानंतरं शरीरपातादूर्ध्वं शिवस्य कर्मत्वेन इतरस्य कर्तृत्वेन प्राप्तव्य प्राप्तृभावस्य व्यपदेशात् कथनादित्यर्थः । किञ्च तस्यैवोपास्यत्वमित्याह—

सू. शब्दविशेषात् ॥ ५ ॥

"अयमन्तरात्मन् पुरुषो हिरण्मयः" इत्यत्र शारीरविधायक सप्तम्यन्तपदात् पुरुष इति उपास्याभिधायक प्रथमान्तपदस्य विशेषात् भेदादित्यर्थः ॥

इतश्च शिवस्यैवोपास्यत्वे स्मृतिरपि प्रमाणमस्तीत्याह—

सू. स्मृतेश्च ॥ ६ ॥

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥" इत्यत्र परशिवस्यैव प्राणलिंगरूपेण सर्वप्राणि हृदयान्तर्वर्तित्वावगमात्। स्वहृदये स्वस्योपास्यत्वासंभवात् शिवस्यैव प्राणलिंगरूपेण धार्यत्वं ध्येयत्वं च संभवति। श्रुतावपि "तस्मिन् यदन्तस्तदुपासितव्यं" इत्यनेन हार्दाकाशमध्यवर्तिनः प्राणलिंगस्य अनुसंधानमुक्तम्। तच्च वीरशैवानां इष्टलिंगार्चनादिरूपं वस्त्वेकमपि-बहिर्लक्ष्यान्तर्लक्ष्यभेदेन द्विविधम्। तथाचात्र प्राणलिंगधारणध्यानमेव उक्तं न तु बाह्येष्टलिंगधारणमिति न भ्रमितव्यम्। अन्याश्च स्मृतयोऽपि बाह्येष्टलिंगधारणे प्रमाणानि सन्ति। मनुस्मृतौ—शिवध्यानपरो भूत्वा शिवलिंगांगसंयुतः। शिवेतरपरित्यागी ध्यानयोगी स उच्यते ॥" इति ध्यानयोगिनिरूपणे। उक्तंच तत्रैव—"अन्तर्धारयितुं लिंगमशक्तः शक्त एव हि। बाह्यं च धारयेल्लिंगं तद्रूपमिति निश्चयात् ॥" शंखस्मृतौ च—"कीटो भ्रमरयोगेन भ्रमरो भवतिध्रुवम्। मानवश्शिव-योगेन शिवो भवति सर्वदा ॥ वामहस्तस्थितं लिंगं सावधानेन

पूजयेत् । मस्तके हृदये कण्ठे धारयेत् सर्वदा द्विजः ॥" पाराशर्य-स्मृतौ — "काश्यां मृतानां जन्तूनां यतीनां लिंगधारिणाम् । ब्रह्मत्वमेव भवति प्रेतत्वं न हि विद्यते ॥ शैवं लिंगार्चनं यस्य यस्यचाग्निपरिग्रहः । वानप्रस्थयतीनां च शरीरे नास्ति सूतकम् ॥" सिद्धान्तागमे— "श्रुतिस्मृतिपुराणेषु वैदिकानां वरानने । लिंगधारणमाख्यातं सर्वसिद्धि-प्रदायकम् ॥"

ननु वीरशैवधर्मप्रतिपादकानां श्रुत्यागमादीनां षडंगषड्लिंगस्थ-लानां उत्तरोत्तरधर्माचरणस्य पूर्वपूर्वधर्माचरणानन्तर्यात् क्रमिकतया तादृश धर्माचरणस्य कालहस्तिश्रीशैलादि देशस्थित तन्तुमययज्ञोपवीतधारण-लिंगधारणादि वैदिकतान्त्रिकधर्मसमुच्चयानुष्ठानपराध्ये विहितत्वेन नेतुं शक्यत्वात् आराध्येतर केवल वीरशैवप्रतिपादकत्वं कथमिति चेन्न । "अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम् ॥" इति श्वेताश्वतरोपनिषदि "अत्याश्रमी सर्वदा सकृद्वा जपेदिति" कैवल्योप-निषदि च श्रूयमाणत्वादत्याश्रमिशब्दस्य "ब्रह्मचारीगृहस्थश्च वानप्रस्थश्च भिक्षुकः । अतिवर्णाश्रमी चेति क्रमाच्छ्रेष्ठा विचक्षणाः ॥" "अति-वर्णाश्रमी साक्षाद्गुरूणां गुरुरुच्यते । यस्य वर्णाश्रमाचारो गलितस्स्वात्म-दर्शनात् ॥" इत्यादिभिः अतिवर्णाश्रमिणः श्रेष्ठत्वावगमात् । अतिवर्णा-श्रमादि शब्दानां वर्णाश्रमाचरणधर्मशीलेषु वृत्यभावात् । पंचमाश्रमवतां वीरशैवब्राह्मणानां परकत्वौचित्यात् । लिंगोपनिषदि "चतुर्थाश्रम-स्सन्यासः पंचमो लिंगधारणम्" इत्युक्तत्वात् वीरशैवानां लिंगधारिणां पंचमाश्रमवत्वं सिद्धम् ।

ननु अतिवर्णाश्रमाचारादि शब्दानां प्रतियोगिप्रसक्तिसापेक्षाणां प्रतियोगिसम्बधं विना कृतेषु आराध्यव्यतिरिक्तेषु वृत्तिः कथमुपपद्यते इति चेन्न । स्वरूपसिद्धान्तोपनिषदि " गणवंशश्चेशानतस्यात् " " अत्याश्रमित्वाद्गुणवंशजानां लिंगांगसंगिनाम् " वेदान्तसारोपनिषदिच–" ईशान कास्माद्गुणवंशजानां लिंगांगशोभामोक्षमार्गैकनिष्ठाः ॥ " इत्युक्तत्वाच्च 'अतिवर्णाश्रमाचारास्संभवन्त्यूर्ध्ववक्त्रतः । ते वै साक्षान्महादेवे मोदन्तेह्यागमेषु च । " इत्याद्युक्तत्वाच्च अतिवर्णाश्रमादिशब्दानां रूढ्या वीरशैवानां वाचकत्वात् । न चात्याश्रमिशब्दः कृताश्रमधर्माचरणेषु वर्तते । न चोक्तं प्रतियोगिप्रसक्तिसापेक्षकाणां अत्याश्रमादिशब्दानां आराध्यव्यतिरिक्तेषु वृत्तिर्न संभवतीति अपहतपाप्मादि शब्दानां ब्रह्मप्रतियोगिकानां ब्रह्मणि पापासंभवात् प्रवृत्तेरसंभवापत्तेः । योगाद्रूढेर्बलीयस्त्वात् अत्याश्रमादि शब्दानां वीरशैवपरकत्वमेव वर्णाश्रमधर्मवतां आराध्यविप्राणां अत्याश्रमिशब्दाभिधेयत्वायोग्यत्वात् परमेश्वरपञ्चमुखसंभूत प्रमथगणनायकघण्टाकर्णगजकर्णरेणुकदारुकगोत्रजातानां केवलातिवर्णाश्रमधर्मानुष्ठायिनां केवलवीरशैवानामेव उक्तश्रुत्यागमपुराणेषु अत्याश्रमिशब्दप्रतिपादनौचित्यात् । न च प्रमथानां परमेश्वरपंचमुखसंभूतानां अत्यन्तरंगाणां प्राकृतमनुष्यवत् प्राकृतस्त्रीपरिग्रहाभावात् कथमेतेषां आधुनिकानां वीरशैवानां तद्वंशजातत्वम् । तथापि यद्यस्ति तर्हि आराध्यविप्राणामपि तद्वंशजत्वमस्तु इति वाच्यम् । " द्वारोपोपस्पृशा द्वारापाय स्वाहा द्वाराप्युपस्पृशे द्वाराप्यै स्वाहेति " ईशान्यवस्यारुथकर्मणि द्वारापशब्दवाच्य नन्दिकेश्वरस्य तत्पन्याश्चेशादेव्याः पुराणादिषु प्रसिद्धायाः विद्यमानत्वेन

भक्तानुग्रहार्थं परमेश्वरस्य किरातरूपादि धारणवत् शिवदीक्षया प्राकृतांशं-तिरोभूय स्त्रीपरिग्रहसंभवात् । तद्वंशजत्वस्यापि केवलानां वीरशैवानां संभवात् आराध्यविप्राणां सर्वथा तद्वंशजत्वस्यानुचितत्वात् वीरशैवधर्मा-चरणाभिमाने तद्वंशजत्वमस्तीत्युच्येत यदि तर्हि भारद्वाज अगस्त्य अंगिरस विश्वामित्र भार्गववासिष्ठादि गोत्रजन्यत्वं न स्यात् । न चेष्टापत्तिः । वृश्चिकभयात् पलायमानस्य आशीविषमुखनिपतनमिव ब्राह्मणत्वस्यापि भंगस्स्यात् । न च ऋषिगणोभयवंशजत्वं अस्माक-माराध्यविप्राणां संभवतीति वाच्यम् । उत्पत्त्या उभयवंशजत्वमिति चेत् "गर्दभेन संभवति तस्माद्गर्दभोद्विरेता" इति श्रुत्या गार्दभवदेकस्य उभयवीर्योत्पत्तौ अत्यन्तलोकहास्यता स्यात् । शिष्यसंप्रदायेनेति चेत् तादृशसंप्रदायस्य गौणतया चतुर्थवर्णस्यापि संभवात् वीरशैवानां गणवंशजत्वात् अत्याश्रमिशब्दवाच्यत्वेन तदनुष्ठीयमान अष्टावर्ण पंचाचारधर्माणां ब्रह्मविद्यांगत्वम् । न चोपनयनसंस्काराभावात् तदनुष्ठितधर्माणामश्रौतत्वात् तदनुष्ठायिनां ब्रह्मविद्याधिकारत्वाभावात् "संस्कारपरामर्शात्तदभावाभिलापाच्चेति" सूत्रे ब्रह्मक्षत्रियवैश्यानां उपनयनसंस्कारविशिष्टत्वात् ब्रह्मविद्याधिकारः न शूद्राणामिति उपनयना-संस्कृतानां ब्रह्मविद्याधिकारस्य निषिद्धत्वात् इति वाच्यम् । शिवदीक्षाया एव उपनयनस्थानीयत्वात् शिवदीक्षासंस्कृतानां तत्सूत्रे ब्रह्मविद्याधिकारस्य विहितत्वात् । एतदपि अपशूद्राधिकरणे स्फुटी भविष्यति ।

ननु शिवदीक्षाया उपनयनस्थानीयत्वे "यज्ञोपवीतं परमं पवित्रं" इत्यादि श्रुत्युक्त यज्ञोपवीतस्याप्यावश्यकत्वात् तदभावात् न तत् स्थानी-

यत्वं इति चेन्न । "यज्ञो वै विष्णुः" इति श्रुत्या विष्णोर्यज्ञत्वावगमात् ईश्वरशक्तेरेव पुंभावं स्वीकृत्य विष्णुरूपत्वात् "विष्णुवल्लभाय नमः" इत्युक्तत्वाच्च । यज्ञेन उपवीतं अविनाभावेन संबद्धं शिवलिंगमित्यर्थः । शिवलिंगैकवाचक परमपवित्रशब्दसमभिव्याहृत यज्ञोपवीतशब्दस्य लिंगवाचकत्वौचित्याच्च । "पवित्रन्ते विततं ब्रह्मणस्पते" "सर्वैलिंगगँ स्थापयति पाणिमन्त्रं पवित्रम्" इत्यादि ऋगादिमन्त्राणां उपबृंहणवाक्ये पवित्रशब्दस्य शिवलिंगपरकत्वेन व्याख्यातत्वात् सच्चिदानन्दात्मक शिवलिंगस्यैव यज्ञोपवीतशब्दवाच्यत्वम् । "ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते" इति श्रुत्या पवित्रशब्दस्य चिल्लिंगवाचकत्व विधानात्—

"सूत्रमन्तर्गतं येषां ज्ञानयंज्ञोपवीतिनाम् ।
ते वै सूत्रविदुर्लोके ते च यज्ञोपवीतिनः ॥"

"यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ।
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ॥"

इत्यादिना ब्रह्मोपनिषदि लिङ्गस्यैव सूत्र यज्ञोपवीतशब्दवाच्यत्वे सिद्धे तस्यैव धार्यत्वात् ।

नन्वस्तु तद्ब्रह्मशब्दप्रतिपाद्यशिवलिङ्गधारणं तन्तुमयस्यापि । "हरिकेशायोपवीतिने" इत्यादिना शिवचिह्नत्वावगमात् तद्धारणे का हानिरिति चेन्न। "क्रियाङ्गं तद्धि वै स्मृतम्" इति श्रुत्या तस्य स्थूलकर्माङ्गत्वात् तद्धारणस्य परमप्रयोजनानुपयुक्तत्वात् । "स शिखावपनं

कृत्वा वहिस्सूत्रं त्यजेद्बुधः " इत्यादिना तस्य निषिद्धत्वात् । शिवचिह्ना-नामनन्तत्वात् तत्तद्धारणस्य कैरप्यशक्यत्वात् । प्रयोजनाभावे प्रेक्षावतां प्रवृत्त्यभावाच्च । एतेन नियमविधिश्च अग्निप्रकतप्तलिङ्गशूलडमरुशंख-चक्राङ्कननिषेधपूर्वकं श्रौतभस्मरुद्राक्षलिङ्गधारणस्वीकारात् । "हरि-केशायोपवीतिने, रुद्रशिखेत्यादौ" भस्मरुद्राक्षादिवच्छिवस्यैव शिखा-सूत्रश्रवणाच्छिवलांछनमिति सिद्धं " इति तन्तुमयधारिभिरुक्तं निरस्तम् । "इतो भ्रष्टस्ततो भ्रष्ट" इति न्यायेन उभयमार्गभ्रष्टत्वात् । एषामुभय-धारणवतां कथं ब्रह्मविद्याधिकारस्संभवतीति विद्वद्भिर्निष्पक्षपातबुद्धिभिर्वि-चारणीयम् । "त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणः ब्रह्मणो वै ब्रह्मणमुपधावत्युपधावामि" । हरदत्ताचार्येण—"त्वं ब्रह्मणस्त्वदुपधा-वनमेव कार्यम्" इत्यादिना तत् श्रुत्यर्थस्य उक्तत्वात् ।

किञ्चस्य—

पितामहस्तु वैश्यस्स्यात् क्षत्रियः परमो हरिः ।
ब्राह्मणो भगवान् रुद्रः सर्वेषामुत्तमोत्तमः ॥

ब्राह्मणो वै सदा लोके ब्राह्मणं चोपधावति ।
महाब्राह्मणमीशानमुपधावेन्नचेतरः ॥

इत्यादिना पराशरपुराणे उपबृंहितत्वाच्च । परमब्राह्मणमुखाविर्भूत गणवंश-जानामस्माकं कैवल्योपनिषत् लिङ्गोपनिषत् स्वरूपसिद्धान्तोपनिषत् श्वेता-श्वतरोपनिषदादि प्रसिद्ध अत्याश्रमादि शब्दवाच्य केवलवीरशैवानां सर्वोत्कृष्टत्वात् तदनुष्ठीयमाणधर्माणां श्रौतत्वाद्ब्रह्मविद्याङ्गत्वमिति भावः ।

तथा च परशिवलिङ्गस्य धार्यत्वेन ध्येयत्वेन स्मृत्यादि सिद्धत्वात् नत्वितरस्योपास्यत्वम् ।

"एष आत्मा अन्तर्हृदय" इति श्रुतौ परिच्छिन्न पुण्डरीकायतनत्व श्रवणात् कथं सर्वगतस्योपास्यत्वमित्याशङ्क्य परिहरति

सू अर्भकौकस्त्वात् तद्व्यपदेशाच्चनेति चेन्न
निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

अर्भकं अल्पं हृदयपुण्डरीकादिकं ओकः स्थानं यस्य, तस्य भावः, तस्मात् । तद्व्यपदेशाच्च । "अणीयान् व्रीहेर्वा" इत्यत्र तस्य जीवस्य असाधारण अनीयस्त्वं धर्मकथनाच्च, न सर्वगतस्य परशिवस्योपास्यत्वं संभवतीति चेन्न । हृत्पुण्डरीकादौ नीचाय्यत्वात्, व्यापकस्यापि ज्योतिर्लिङ्गादिरूपेण ध्यातुं शक्यत्वात्, अणीयस्त्वमपि व्योमवत्सम्भवति । यथा सर्वगतस्यापि व्योम्नः सूचीरन्ध्रः कर्णशष्कुल्याद्यवच्छेदेन परिच्छिन्नत्वं, स्वरूपेण व्यापकत्वं तथा सर्वगतस्यापि परमेश्वरस्य शरीरत्रयावच्छेदेन लिङ्गत्रयात्मना । न च परिच्छिन्नत्वापरिच्छिन्नत्वयोरसामानाधिकरण्यात् एकस्य परिच्छिन्नत्वस्य बाधितत्वात् उपाधेर्मिथ्यात्वात् इति वाच्यम् । तद्बहिर्निर्वहिः, श्रुतिर्न गगनं, इत्यादि प्रतीत्यभावात् गगनादौ अविच्छिन्नत्वानवच्छिन्नत्वयोरिव ब्रह्मण्यपि अवच्छिन्नत्वानवच्छिन्नत्वयोः पारमार्थिकत्वस्य स्वीकारात् ।

ननु उपाधेरपारमार्थिकत्वे तदवच्छिन्नत्वस्य कथं पारमार्थिकत्वमिति चेन्न उपाधेरपारमार्थिकत्वे तदवच्छिन्नत्वस्य पारमार्थिकत्वं मास्तु जगत्सत्यत्ववादिभिरस्माभिः तस्यापि सत्यत्वस्यैव स्वीकृतत्वात् ।

अन्यथा परिच्छिन्नलिङ्गत्रयोपासनया अपरिच्छिन्न परशिवाप्तिर्न स्यात् । "यद्यथेहोपासते" इत्यादि श्रुतेः । "यं यं भावं स्मरन्वापि" इत्यादि स्मृतेश्च । तथा च परशिवस्यैव स्वस्वातन्त्रशक्त्या अनेकरूपत्वात् । भक्तानुग्रहार्थं इष्टादि लिङ्गरूपेण स्थूलादिशरीरावच्छिन्नत्वं न विरुध्यते इति भावः ।

ननु परशिवस्य हृत्पुण्डरीकादि सम्बन्धस्वीकारे जीववत्तस्यापि सुखदुःखानुभवप्रसङ्ग इत्याशंक्य परिहरति—

सू. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

भक्तचिन्तामणेः परशिवस्य स्वलीलाकृतदिव्यमङ्गलविग्रहस्य जीववत् सम्भोगप्राप्तिरिति चेन्न, वैशेष्यात् । "अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः" इत्यादिना अणुत्व-महत्व-सर्वान्तर्यामित्वादेः परमेश्वरस्यैवोपदेशात् । "तस्मिन्यदन्तस्तदुपासितव्यम्" इत्यादिना हृत्पुण्डरीकोपास्यत्वोपदेशात् "एष अपहतपाप्मा" इति अपहतपाप्मत्वनिर्देशात् जीवपरमेश्वरयोर्वैशेष्यं, विशेष एव वैशेष्यं भेद इत्यर्थः । चैतन्यस्वरूपेणैकत्वेऽपि विभुत्वाणुत्व-सर्वज्ञत्व-किञ्चिज्ज्ञत्वादिना तयोर्भेदोऽपि स्वाभाविक इति वक्तुं शक्यते । इदमत्र ज्ञातव्यम्—ब्रह्मकर्ममायागुणरूपायाः अविद्याशक्त्या संबद्धत्वात् संकुचितस्वशक्तिरत एव ज्ञानक्रियासामरस्यात्मनश्शिवस्य अंशरूपत्वाज्जीवस्येव न शिवस्य सुखदुःखादि साक्षात्कारः सम्भवति । एतदप्यग्रे "अंशो-

नानाव्यपदेशादित्यदि सूत्रव्याख्यानावसरेवक्ष्यते। तथा च शिवस्य मायिकसत्वरजस्तमोगुणरहितत्वात् अकुण्ठितेच्छाद्यनेक कल्याणगुणपूर्णत्वात् न जीवतौल्यम्। यद्यपि शिवातिरेकेण पदार्थान्तरं नास्तीत्यङ्गीक्रियते तथापि जीवब्रह्मविभागवत् स्वविमर्शशक्त्यनादि परिकल्पित माया-संबन्धाज्जीवः तदसंबन्धाच्च शिवो भवति। यथा कुण्डलीभूतसर्पस्य दीर्घीभूतसर्पस्य ह्रस्वत्वदीर्घत्वादिना प्रभाकरप्रभातन्मण्डलयोः व्यापकत्व-परिच्छिन्नत्वादिना भेदस्स्वाभाविकः। पुनः कुण्डलाकारं स्वप्रयत्न-विशेषेण विहाय यथावत्सर्पो भवति, तथा जीवेशयोः किञ्चिज्ज्ञत्व-सर्वज्ञत्वादिना भेदः, शिवयोगसाधनाभ्यास प्रयत्नविशेषेण जीवत्वं विहाय शिवो भवति। अतः शिवजीवभेदाभेदयोः पारमार्थिकत्वात्, संसारदशापन्नजीवभोगादेरिव न भोग इति भावः।

शिवस्यैव सर्वसंहारकत्वं इति दर्शयितुं अधिकरणान्तरमारभते—

अत्ता चराचरग्रहणात् ॥ ९ ॥

"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदन" इत्यत्र अत्ता, संहर्ता, परमेश्वर एव, कुतः? चराचरग्रहणात्। स्थावरजङ्गमात्मकस्य चराचरस्य जगतः ब्रह्मक्षत्रशब्दभ्यां उपलक्षणत्वेन ग्रहणादित्यर्थः। तथा च सर्वजगत्संहर्तृत्वस्य इतरस्मिन्नसंभवात्। "अनश्नन्नन्योऽभि-चाकशीति" अभोक्तृत्वप्रतिपादकश्रुतेः प्राकृतकर्मफलभोक्तृत्वनिषेध-परकत्वात् ब्रह्मणस्सर्वसंहर्तृत्वस्य सर्ववेदान्तसिद्धत्वात् तस्यैव सर्वसंहर्तृत्व-मिति भावः।

पुनर्हेत्वन्तरमाह—

प्रकरणाच्च ॥ १० ॥

"न जायते म्रियते वा विपश्चित्" इत्यादेः असाधारण अनाद्यनन्तत्वादि धर्मावच्छिन्न ब्रह्मप्रकरणादित्यर्थः। तथा च ब्रह्म-प्रकरणपठित सर्वसंहर्तृत्वं नेतरस्योपपद्यते इति भावः।

अथेदानीं जीवब्रह्मणोः एकदेशवृत्तित्वात् बिम्बप्रतिबिम्बभावो न संभवतीत्याह—

गुहां प्रविष्टौ आत्मानौ हि तद्दर्शनात् ॥ ११ ॥

"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ" इत्यत्र गुहां प्रविष्टौ शिवजीवौ, न तु बुद्धिजीवौ, हि यस्मात्, आत्मानौ, आत्मस्वरूपसमानस्वभावौ, तस्मादित्यर्थः। बुद्धेरात्मत्वेन साम्याभावात्। सर्वगतस्य परमात्मनः गुहाप्रवेशो न उपपद्यत इति यद्युच्येत तदा उपपत्तिमाह—तद्दर्शनादिति। "यो वेद निहितं गुहायां परमे व्योमन्" "आत्मानमन्विच्छ्य गुहां प्रविष्टम्" इत्यादिश्रुतिषु परमेश्वरस्यापि 'गुहाप्रवेशदर्शनात्' इत्यर्थः।

ननु "ऋतं पिबन्तौ" इत्यनेन "छायातपौ" इत्यनेन च कर्मफलभोक्तृत्वछायातपवत्परस्परवैलक्षण्ययोरुक्तत्वात् कथं शिवजीवयोः गुहाप्रविष्टत्वमिति चेन्न। छत्रिन्यायेनापि कर्मफलभोक्तृत्वस्य आत्मनो-रविरुद्धत्वात् मलसम्बन्धतदसम्बन्धाभ्यां आत्मनोः परस्परं वैलक्षण्यस्य

स्वीकृतत्वात् । एवं च शिवजीवात्मनोः गुहारूप एकदेशनिरूपित-वृत्तित्वस्य कथनात् न तयोः बिम्बप्रतिबिम्बभावो युज्यते । बिम्ब-प्रतिबिम्बयोर्लोके एकत्रावस्थित्यभावस्य सर्वजनप्रसिद्धत्वात् ।

पुनर्हेत्वन्तरमाह—

सू. विशेषणाच्च ॥ १२ ॥

" आत्मानं रथिनं विद्धि, शरीरं रथमेव च । सोऽध्वनः पारमाप्नोति " इत्यत्र गन्तृगन्तव्यत्वेन विशेषणात् । जीवेश्वरवेव गुहा-प्रविष्टौ न तु बुद्धिजीवौ रथिरथरूपविवक्षया शिवजीवयोर्विशेषणोप-देशाच्च ।

सर्वव्यापकस्य परमेश्वरस्य गुहावर्तित्वमुपदिश्य तस्यैव प्रदेशान्तरं दर्शयति—

सू. अन्तर उपपत्तेः ॥ १३ ॥

" य एष अक्षिणि पुरुषो दृश्यते । एष आत्मेति हो वाच । एतदमृतमभयमेतद्ब्रह्म " इत्यादि श्रुतौ परमेश्वर एव अन्तरः अक्षिमध्यवर्ती उपदिष्टः । न तु जीवः छायात्मा वा कुतः ? उपपत्तेः । आत्मत्व अमृतत्व अभयत्व ब्रह्मत्वादीनां धर्माणां परमेश्वर एव उपपत्तेः युक्तत्वादित्यर्थः ।

सर्वव्यापकस्य परशिवस्य कथमक्षिस्थानकत्वमित्याशंकायामाह—

सू. स्थानादि व्यपदेशाच्च ॥ १४ ॥

"यश्चक्षुषि तिष्ठन् चक्षुषोऽन्तरोऽयं चक्षुर्न वेद यस्य चक्षुश्शरीरम् । यश्चक्षुरन्तरोयमयत्येष आत्मा अन्तर्याम्यमृतः" इत्यत्र चक्षुस्थानत्वस्यापि परशिवस्य निर्दिष्टत्वात् हृदयाद्युपास्यत्ववत् अक्ष्युपास्यत्वमपि तस्यैवोपपद्यते उपासनायाः किञ्चिद्गुणविषयकत्वनियमात् । तदप्यादि शब्देनोच्यते "तस्योदितिनाम हिरण्यश्मश्रुः" इत्यादि श्रुतौ । प्राकृत गुणातीतस्य परशिवस्य नामरूपव्यपदेशात् । "तदादि मध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् । उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्", "द्वावेतौ ब्रह्मणो रूपम्" इत्यादिना परस्यैव निराकारत्वसाकारत्वावगमात् न तयोस्तत्राविरुद्धत्वं शङ्कनीयम् ।

इतश्च अक्ष्यन्तः पुरुषः साक्षाच्छिव एवेति निर्दिशति—

सू. सुखविशिष्टाभिधानादेव च ॥ १५ ॥

सुखविशिष्टस्य परब्रह्मणः "प्राणो ब्रह्म" इत्यादि उपक्रमवाक्ये श्रूयमाणत्वात् इहापि तस्यैवाभिधानात् । "आचार्यस्तु ते गतिं वक्ता" इति श्रुत्या गतिमात्रस्यैव प्रतिज्ञानात् नान्यस्योपास्यत्वम् । "एतं हि सर्वाणि वामान्यभिसंयन्ति" इत्यत्रापि सुखविशिष्टाभिधानात ब्रह्मैवोपास्यम् । "प्राणं च हास्मै तदाकाशं चोचुः" इति श्रुत्या कं शब्दस्य खं शब्दस्य च ब्रह्मप्रतीकभूताकाशार्थस्य प्रतिपादनात् नार्थान्तरमुपास्यत्वेनोपदिष्टम् ।

पुनर्हेत्वन्तरमाह—

सू. श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥

श्रुतौ अभ्यस्ता उपनिषत् आत्मविद्या, येन तस्य या ब्रह्मविदो गतिः, देवयानाख्या, तस्याः अभिधानात्। "ते अर्चिषमभिसंभवन्ति" इत्युत्तरवाक्ये कथनादित्यर्थः तथा च सैवगतिः, इहोपकोसलस्य अक्षिपुरुष विदः उपदिश्यमाना दृश्यते । तस्मात् अक्षिपुरुषस्य ब्रह्मत्वं सिद्धम् ।

आसन्नर्थे हेत्वन्तरमाह—

सू. अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥

इतरः छायापुरुषादिः न अक्ष्यन्तः पुरुषो भवति । कुतः अनवस्थितेः । उपासकस्य सर्वत्र छायासम्पादक पुरुषान्तरस्य असान्निध्यात् । असम्भवाच्च अमृतत्वादि गुणानामसम्भवच्चेत्यर्थः । अक्ष्यन्तः पुरुषश्शिव एवेत्यर्थः ।

सर्वगतस्य शिवस्य चक्षुरन्तरोपास्यत्वमुपदिश्य सर्वान्तरोपास्यत्व-मप्याह —

सू. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरोऽयं पृथिवी न वेद यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः" इत्यादि "य इमं च लोकम्" इत्याद्युपक्रम्य अन्तर्यामि ब्राह्मणवाक्यं श्रूयते । तत्र अधिदैवादिषु पृथिव्यादिषु यः अन्तर्यामी उक्तः सः परशिव एव, कुतः? तद्धर्मव्यपदेशात् । तस्य परशिवाल्लिङ्गस्य

धर्माणां पृथिव्याद्यधिदेवतानियन्तृत्व अमृतत्वात्मत्वादीनां व्यपदेशात् कथना दित्यर्थः ।

ननु परमशिवस्य ब्राह्मणः निर्धर्मकस्य यमयितृत्वासम्भवात् शुद्धसत्त्वप्रधानमायाप्रतिबिम्बरूपेश्वरस्यैव सर्वनियन्तृत्वादिकमिति चेन्न । तादृश प्रतिबिम्बे अन्तर्याम्यमृत ,इत्युक्त अमृतत्वासम्भात् । तस्मादनन्तस्य शिवस्यैव सर्वनियन्तृत्वसम्भवात् । न च सर्वनियन्तृत्व सर्वकतृत्वादि धर्मानवच्छिन्नस्य शिवान्यस्यैव परब्रह्मत्वम् इति वाच्यम् । तादृश निर्धर्मकस्य स्वस्वरूपज्ञानरहितस्य स्फटिकशिलादि वज्जडत्वापत्तेः । तत्सत्त्वे प्रमाणाभावाच्च अण्डरसन्यायेन स्वविमर्शशक्त्यविभागपरामर्शदशायां तस्यैव निर्गुणत्वं विभागपरामर्शदशायां च सगुणत्वमिति वक्तुं शक्यत्वात् ।

ननु " विश्वाधिको रुद्र " इत्यादौ विश्वाधिकत्व निर्देशात् विश्वान्तर्यामित्वं कथमुपपद्यते इति चेन्न । व्योमवत्परिपूर्णस्य महेश्वरस्य विश्वाधिकत्व विश्वान्तर्यामित्वयोरविरोधात् ।

ननु नियन्तृत्वमित्यत्र नियमनं, चेतनसान्निध्यात् जडस्य व्यापारः, तच्छक्तिमत्वं नियन्तृत्वं तच्च अचिन्त्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नम् । निर्गुणपरब्रह्मणः इति चेन्न । भवन्मते ब्रह्मातिरिक्तस्य वस्तुनो अभावात्; तत्सान्निध्यस्यासम्भवात् ।

किञ्च–नियामकस्यापि नियामकान्तराङ्गीकारे अनवस्था प्रसङ्गः । न च तयोर्भेदाभावात् नानवस्थेति वाच्यम् । मिथ्याभूतसत्ययोरत्यन्त-

भिन्नत्वात् । उपाध्यवच्छिन्नानवच्छिन्नयोः भेदस्य मिथ्यामायावादि स्वीकृतत्वात् । अन्यथा तत्त्वमस्यादिवाक्ये लक्षणानुपपत्तेः । तस्मात् सर्वनियन्तृत्वकर्तृत्व सर्वज्ञत्वादि धर्मविशिष्टस्यैव परब्रह्मणश्शिवस्य सर्वान्तर्यामित्वं सिद्धम् ।

ननु महदहंकारादिरूपेण परिणामित्वात् साङ्ख्योक्त प्रधानस्यैव अन्तर्यामित्वमस्तु इत्यत्राह—

सू. न च स्मार्तं अतद्धर्माभिलापात् ॥ १९ ॥

स्मार्तं सांख्यस्मृतिनिर्दिष्टं प्रधानमित्यर्थः । चकारात् तत्सत्वगुण प्रतिफलितं चैतन्यमपि ग्राह्यम्, न अन्तर्यामि भवति । कुतः ? अतद्धर्माभिलापात् । प्रधानादि भिन्न परशिवधर्माणां अभिलापादित्यर्थः ।

"अदृष्टो द्रष्टा, अश्रुतश्श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता" इत्यत्र उक्त अदृष्टत्वादीनां प्रधाने सत्वेऽपि द्रष्टृत्वादीनां तत्रासत्वात् । न प्रधानस्यान्तर्यामित्वम् ।

"ननु अजामेकां" इत्यादि श्रुतौ प्रपञ्चकारणत्वस्य निर्देशात् ब्रह्मसम्बन्धमात्रेण सूर्यकान्तादाविव तत्र प्रवृत्तिसम्भवात् । तस्यैव अन्तर्यामित्वं वक्तुं शक्यत इति चेन्न । "सोऽकामयत बहुस्यां प्रजायेय", "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिना परशिवस्यैव ब्रह्मणः अन्यनिरपेक्षतया जगज्जन्मादि हेतुत्वावगमात् । किञ्च- तत्प्रतिबिम्बितेश्वरस्यापि नान्तर्यामित्वम् । तस्य मिथ्यात्वात् । ब्रह्मप्रधानयोर्नीरूपत्वात् बिम्बप्रतिबिम्बभावकल्पनाया असम्भवात् ।

"अखण्डाद्वैतभानेतु सर्वं शिवमयं जगत्।" "सर्वं खल्विदं ब्रह्म" इत्यादि वाक्येन निर्दिष्टं जगतः परब्रह्मशिवस्वरूपत्वं मिथ्याभूतमाया तत्प्रतिफलित ईश्वरोपादानकत्वे नैव सम्भवति। तस्माद्विश्वात्मक परशिवस्यैव सर्वविश्वान्तर्यामित्वं सिद्धम्।

ननु जीवस्य चेतनत्वात् द्रष्टृत्वादि धर्माणां तत्र सम्भवात्तस्यैव-आन्तर्यामित्वं कुतो न भवतीत्याशङ्कायामाह—

**सू. शारीरश्चोभयेऽपि हि भेदेनैन मधीयते ॥ २० ॥**

शरीरश्च जीवोऽपि नेत्यनुवर्तनं अन्तर्यामि न भवति। कुतः? एनं जीवं उभयेऽपि काण्वामाध्यन्दिनाश्च भेदेन अन्तर्यामि भिन्नतया यथा—"यो विज्ञाने तिष्ठन्" इती काण्वा, "य आत्मनि तिष्ठन् इति माध्यन्दिनाः" अधीयते पठन्ति। अत्र विज्ञानात्मशब्दयोः जीवपरत्वात् जीवस्य प्रतिबिम्बरूपत्वे आत्मशब्दवाच्यत्वं न स्यात्। तस्य मिथ्यात्वात्। तत्त्वज्ञानेन उपाधिनाशे मोक्षः इत्यङ्गीकारे जीवेश्वरयोर्नाश एव मोक्ष इति सम्पद्यते। अतो बौद्धादिमतप्रवेशापत्तिः। आत्महननमपुरुषार्थः इति अपुरुषार्थत्वापत्तिश्च।

ननु घटाकाशोपाधिभूत घटस्य नाशे तस्य आकाशमात्रवत् अन्तःकरणावच्छिन्न चैतन्यस्योपाधिभूत अन्तःकरणनाशे तदवच्छिन्न चैतन्यं चैतन्यमात्रं भवति। कुतो दोषप्रसक्तिरिति चेत्। तस्य जीवत्वाङ्गीकारे घटाद्यवच्छिन्न चैतन्यस्यापि जीवत्वापत्तेः उपाध्योर्जडत्वाविशेषात्। तस्मात् अजडान्तःकरणविशिष्टस्य जीवत्व वाच्यम्। अत

एव " चित्तमात्मेति शिवेन सूत्रितम् । अन्यथायमात्मनि तिष्ठन्निति " अन्तर्यामि ब्राह्मणवाक्यविरोधः स्यात् ।

ननु "नान्यतोऽस्ति द्रष्टा" इत्यादिना परमेश्वरात् अन्यद्रष्ट्रादेरभावस्य ज्ञायमानत्वात् द्रष्टृद्वयं एकस्मिन् शरीरे नोपपद्यत इति चेन्न । " द्वा सुपर्णेति " मन्त्रेण जीवब्रह्मणोस्सामानाधिकरण्यस्य निर्दिष्टत्वात् नान्यतोऽस्ति द्रष्टेति श्रुत्या अधिष्ठात्रन्तरो निषिद्धः । न तु किञ्चिज्ज जीवोऽपि । "यत्र हि द्वैतमिव भवति" इत्यनेन जीवब्रह्मणोः सङ्कुचित स्वशक्त्यवस्थायां स्वाभाविकभेदो निर्दिष्टः; यत्रत्वस्य " सर्वमात्मैवाभूत् तत्केन कं पश्येत् " इत्यादिना विकसितस्वशक्तिदशाय तयोः स्वाभाविको अभेदः ।

नन्वेतादृशमोक्षदशायां अभेदस्यैव स्वीकारे भेदस्य स्वाभाविकत्वं न सिध्यति इति चेन्न ।

तत्रापि " सदा पश्यन्ति " " मम साधर्म्यमागताः " " मुक्तानां परमा गतिः " " सायुज्यं प्रतिपन्नाय ", " यस्मिन् पदे विराजन्ते मुक्ता संसारबन्धनैः " इत्यादिना भेदस्य ज्ञायमानत्वात् उक्तः ।

एवं च समस्तवेदान्तानां भेदाभेदप्रतिपादकत्वात् । जीवब्रह्मणो र्भेदाभेदावपारमार्थिकाविति वाच्यम् । तस्मात् सर्वान्तर्यामित्वं शिवस्यैव सिध्यति तस्यैव सर्वनियामकत्वात् ।

परशिवस्य सर्वश्रेष्ठत्वं दर्शयितुं अधिकरणान्तरमारभते—

सू. अदृश्यत्वादिगुणको धर्मोक्तेः ॥ ११ ॥

"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं, तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादि-श्रुतौ अदृश्यत्वादि गुणको परमेश्वर एव । कुतः धर्मोक्तेः ।" "यस्सर्वज्ञस्सर्ववि‌द्धि" त्यादिना परशिवासाधारणसर्वसाक्षित्वादि धर्माणां उक्तेः वचनादित्यर्थः ।

अस्मिन्नर्थे हेत्वन्तरमाह—

सू. विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

इतरौ प्रकृतिजीवौ न भूतयोनिशब्दवाच्यौ । कुतः? विशेषणभेदव्य-पदेशाभ्याम् । विशेषणं च भेदव्यपदेशश्च ताभ्यां "दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्रणो ह्यमानश्शुभ्रो ह्यक्षरात्परतः शिवः" इत्यत्र दिव्यत्व अप्राणत्वादि विशेषणात् । अक्षरात्परतः पर इत्यनेन च भेदव्यदेशाच्च "क्षरं प्रधानं अमृताक्षरं हरः । क्षरात्मना वीशते देव एकः" इति श्रुत्या जीवस्य अक्षरशब्दवाच्यत्वात् "कूटस्थोऽक्षर अच्यते" इति स्मृतेश्च ।

पुनरपि हेत्वन्तरमाह—

सू. रूपोपन्यासाच्च ॥ २३ ।

भूतयोनिः परशिव एव । कुतः, रूपोपन्यासाच्च 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वान्तरात्मा' इत्यादि श्रुतौ परमेश्वरस्य सर्वभूतान्तरत्वस्य सर्वात्मकत्वस्य च रूपस्य उपन्यासात् प्रधानजीवयोः सर्वभूतान्तरत्व सर्वात्मकत्वयोरयोगात् अदृश्यत्वादिगुणकः परमेश्वर एवेति सिद्धम् ।

परशिवस्य विश्वकारणत्वादि धर्मानुद्दिश्य वैश्वानर परमेश्वरः इत्याह–

सू. वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इत्यादि श्रुतौ वैश्वानरः परमेश्वर एव उपास्यत्वेन निर्दिष्टः ।

ननु "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैव घोषो भवति । यमेतत्कर्णावपिधाय शृणोति" इति बृहदारण्यकश्रुत्या वैश्वानरशब्दस्य जठराग्नौ प्रयोगदर्शनात् "एष वाग्निर्वैश्वानरः" इत्यादिना प्रसिद्धभूताग्नयादौ वैश्वानरशब्दस्य वर्तमानत्वात् । किञ्च " "प्रादेशमात्रं" इत्यनेन वैश्वानरशब्दवाच्यस्य परिच्छिन्नत्वावगमात् परमेश्वरस्य तदसम्भवात् न वैश्वानरः इतिचेन्न । साधारणशब्दविशेषात् साधारणशब्दयोः वैश्वानरात्मशब्दयोः विशेषात् । वैश्वानरशब्दस्य

जाठरभूताग्न्यादि साधारण्येऽपि आत्म शब्दस्य जीवपरसाधरण्येऽपि च "कोऽनात्मा"? किं ब्रह्म? इति "आत्मानमेवेमं वैश्वानरं संप्रत्यध्येऽषि। तमेव नो ब्रूहि" इत्यादिषु परमेश्वरमात्रवृत्ति ब्रह्मादिशब्दप्रयोगादित्यर्थः

अत्रैव हेत्वन्तरमाह—

सू. स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" विति। "अग्निरास्यं द्यौर्मूर्धे" त्यादिषु याद्धश्वरूपत्वं स्मर्यमाणं प्रतिपाद्यमानं तत् अनुमानं स्यात्। परमेश्वर एव वैश्वानर इत्यत्रानुमानकं स्यादित्यर्थः। तथा च विश्वरूपत्वादिधर्मस्य परमेश्वरादन्यत्र जठरादावनुपपद्यमानत्वात्। वैश्वानरः परमेश्वर एवेति सिद्धम्।

पुनर्हेत्वन्तरमाह—

शब्दादिभ्योऽन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशाद-
संभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

ननु वैश्वानरशब्दादिभ्योऽन्तः प्रतिष्ठानात् "सयोह्वैनमग्निं वैश्वानरं पुरुषोऽन्तः प्रतिष्ठितं वेद" इत्यत्र पुरुषान्त प्रतिष्ठितत्वस्येश्वरेऽसंम्भवात् ईश्वरादन्य एव वैश्वानर इति चेन्न। तथा दृष्युपदेशात्। तथा जाठरभयवच्छिन्नस्य शिवस्य दृष्टेरुपासनया उपदेशात् कथनात्।

असम्भवात् परमेश्वरादन्यस्मिन् द्युमूर्धत्वादीनां धर्माणामसम्भवात्। पुरुषमपि चैनं एनं वैश्वानरं पुरुषमधीयते वाजसनेयिनः। "सयो हैनमेवाग्नि" मित्यादिना।

अन्यत्रानुपपत्तिमाह—

अत एव न देवताभूतश्च ॥ २७॥

अत एव प्रागुक्तद्युमूर्धत्वादिधर्माणां असम्भवादेव भूतं प्रसिद्ध-भूताग्निः, देवता, तदभिमानि देवता च एतद्द्वयमपि, न, वैश्वानर-शब्दवाच्यमित्यर्थः। तथा च सर्वान्तर्यामित्व सर्वात्मकत्व द्युमूर्धत्वादि-धर्माणां शिवादन्यत्रानुपपन्नत्वात् स एव वैश्वानरः इति भावः

जाठराग्न्यवच्छिन्नस्य शिवस्य उपास्यत्वमुक्त्वा केवल शिवस्य उपास्यत्वमित्यस्मिन् अर्थे आचार्यमतं दर्शयति।

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

साक्षात् जाठराग्न्यविशिष्टे केवलब्रह्मण्यपि अविरोधं, वैश्वानरशब्दस्य विरोधराहित्यं, जैमिनिः, मन्यते इत्यर्थः। विश्वश्चासौ नरश्च विश्वनरः विश्वरूपः परशिवः विश्वनर एव वैश्वानरः। तथा च विश्वरूपपरशिवे वैश्वानरशब्दस्य योगव्युत्पत्या वृत्तिसम्भवात् वैश्वानर-शब्दवाच्यः सर्वव्यापकः परशिव एव। "रुद्रो वा एष यदग्निः। तस्यैते तनुवौ घोरान्या शिवान्या" इति श्रुतौ अग्नेः साक्षात्परशिवा-

त्मकत्वोपदेशात् । अग्रं नयतीति व्युत्पत्त्या च अग्निशब्दवाच्योऽपि सर्व-श्रेष्ठः परशिव एव ।

ननु व्यापकस्य प्रादेशिकत्वं कथं उपपन्नस्यादित्यशङ्कायांमाश्मरथ्य-मुनिमतं दर्शयति—

अभिव्यक्तेराश्मरथ्यः ॥ २९ ॥

अपरिमितस्यापि परब्रह्मणश्शिवस्य प्रादेशमात्रपरिणामवत्वप्रति-पादक श्रुतिरुपपद्यते । कस्मात् अभिव्यक्तेः, परशिव एव भक्तानु-ग्रहार्थं हृदयादिप्रदेशविशेषेषु अभिव्यज्यते ।

"सर्वानन शिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी च भगवान् तस्मात् सर्वगतः शिवः" इति श्वेताश्वतरश्रुतावपि सर्वगतस्यापि भक्तो-पासनार्थं परिच्छिन्नत्वं व्यपदिश्यते । तस्मादत्रापि प्रादेशिकत्वं न विरुध्यते इति भावः ।

अस्मिन् अर्थे आचार्यान्तरमतं दर्शयति—

अनुस्मृतेर्बादरिः ॥ ३० ॥

"अनुस्मृतेः हृदयादि प्रदेशविशेषेषु परशिवस्यावगमात् सः परमेश्वरः प्रादेशमात्रः इत्युच्यते। यथा आढकादि परिमितं तण्डुलादिकं आढकादिकमित्युच्यते तथा प्रदेशावगतः परमेश्वरः प्रादेश" इति बादरिराचार्यो मन्यते ।

इतश्च सर्वगतस्य शिवस्य परिच्छिन्नत्वं न विरुध्यते इत्यत्र जैमिनिमतमाह—

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

प्रादेशमात्र श्रुतिः प्रादेशमात्रसंपत्तेरुपपद्यत इति जैमिनिराह । तथाहि वैश्वानरस्य प्रादेशमात्रत्वे श्रुत्यन्तरं दर्शयति । वाजसनेय ब्राह्मणे इत्यर्थः । "प्रादेशमात्रमिह वै देवास्सुविदिता अभिसम्पन्ना-स्तथा तु वा एतान् वक्ष्यामि । यथा प्रादेशमात्रमेवाभिसम्पातयिष्या-मीति" । सहोवाच "मूर्धानमुपदिशन्नुवाच", एष एवावतिष्ठन्वै-श्वानर" इति । चक्षुष्युपदिशन्नुवाच । एष वै सुतेजा वैश्वानर इति । नाशिके उपदिशन्नुवाच । एष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाच । एष वै बहुलो वैश्वानर इति । अप उपादिशन्नुवाच । एष वै रयिर्वैश्वानर इति । चुबुकमुद्दिश-न्नुवाच । एष वै प्रतिष्ठा रयि वैश्वानर" इत्यादिना द्युलोकप्रभृतिषु वैश्वानरावयव मूर्धादि सम्पत्तेर्दर्शनात् । जैमिनिः परशिवब्रह्मणः प्रादेशमात्रत्वमविरुद्धमिति मन्यते ।

पुनर्हेत्वन्तरमाह—

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

एनं सर्वव्यापकपरशिवं अस्मिन् भ्रूमध्यादौ आमनन्ति जाबालादयः इति शेषः । कस्मिन् प्रतिष्ठित इति प्रश्ने वरणायां नास्यां च प्रतिष्ठित

इति। का वै वरणा का च नासीति सर्वानिन्द्रियकृतान् दोषान् वारयति। तेन वरणा भवतीति। सर्वानीन्द्रियकृतान् दोषान् नाशयति तेन नाशी भवतीति निरुच्य, कतमच्चास्य स्थानं भवतीति भ्रवोर्घ्राणस्य च यस्सन्धिः। स एव द्युलोकस्य च परस्य च सन्धिर्भवतीति। जाबालश्रुतौ परशिवस्य प्रादेशमात्रत्व व्यपदेशात् परशिवस्य जाठराग्न्यवच्छिन्नतया उपास्यत्वेन वैश्वानरश्शिव एव सर्ववेदान्तेषु प्रायेण परोपासनस्यैव निर्दिष्टत्वात् शिवलिङ्गव्यतिरिक्तपरब्रह्मशब्दवाच्यत्वस्य गगनकुसुमायमानत्वात् वैश्वानरशब्दवाच्यं शिवलिङ्गमेवेति सिद्धम्।

इति श्रीमच्छिवाद्वैतप्रतिपादिकायां शाङ्करीवृत्तौ समन्वयाध्यायस्य
द्वितीयः पादः समाप्तः।

## तृतीयः पादः

केषाञ्चित् श्रुतिवाक्यानां षड्विधलिङ्गतात्पर्येण सर्वजगन्मय सर्वज्ञ-परशिवब्रह्मणि समन्वयप्रकारं निरूप्य पुनः केषाचिद्वाक्यानां संशयनिरसनाय सर्वज्ञसार्वभौमेण व्यासेन तृतीयः पादः प्रारभ्यते ।

सू. द्युभ्वाद्यायतनं स्वशब्दात् । १ ॥

द्यौश्च भूश्च द्युभुवौ ; द्युभुवौ आदी यस्य तत् द्युभ्वादि तस्य । "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः" इत्यत्र, सूत्रे मणिगणा इव पृथिव्यन्तरिक्षमनःप्राणादिजगतः, ओतत्वविशिष्टस्य आयतनं स्थानं ब्रह्म भवति, न तु प्रधानक्षेत्रज्ञ भूतवायूनां आयतनत्वं सम्भवति स्व शब्दात् तस्मात् "तमेवैकं जानथ आत्मानं" इति । आत्मशब्दश्रवणादित्यर्थः ।

किञ्च "प्रपञ्चोपशमं शान्त शिवमद्वैत चतुर्थं मन्यन्ते ! स आत्मा स विज्ञेयः । इति माण्डूक्यश्रुतावपि आत्मशब्दस्य परशिव परत्वात् नेतरो द्युभ्वाद्यायतनं भवितुमर्हति ।

ननु "... प्राणैश्च सर्वैस्तमेवैकं जानथ आत्मानमन्यावाचो मुञ्चथामृतस्यैष सेतुः" इत्यत्र सेतु शब्दनिर्देशात् सेतोश्च पारवत्वोपपत्तेः ब्रह्मणस्तदनुपपत्तेः ; अनन्तमपारमिति श्रवणात् शिवादन्यस्य द्युभ्वाद्यायतनत्वं स्यादित्याशङ्कायां हेत्वन्तरमाह —

सू. मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

मुक्तैरुपसृप्यं मुक्तोपसृप्यं आणवमायीयकार्मिक मलत्रयदोषादिमुक्तैः-

मलत्रयं चोक्तमध्यात्मनये—

गोपितस्स्व महिम्नोऽस्य संमोहाद्विस्मृतात्मनः ।
यस्संकोचस्स एवास्य आणवो मल उच्यते ॥ १ ॥

ततष्षट् कञ्चुकव्याप्तिविलोकितनिजस्थितेः ।
भूतदेहे स्थितिर्यासौ मायीयो मल उच्यते ॥ २ ॥

यदन्तःकरणाधीनारब्धकर्मेन्द्रियादिभिः ।
बहिर्व्याप्रियते कार्मं मलमेतस्य तन्मतम् ॥ ३ ॥ इति ।

उपसृप्यं, प्राप्यं ब्रह्म द्युभ्वाद्यायतनं तस्य प्राप्यत्वस्य व्यपदेशात् ।

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

इत्युक्त्वा "यथा नद्यस्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरुपे विहाय; तथा विद्वान् नामरुपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यं" "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इत्याद्यै। "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र

ब्रह्म समश्नुते" इत्यादौ च ब्रह्मणः मुक्तोपसृप्यत्वस्य प्रसिद्धत्वात्। प्रधानादेर्मुक्तोपसृप्यत्वस्य क्वचिदप्यदर्शनात् द्युभ्वाद्यायतनं ब्रह्मैव।

पुनर्हेत्वन्तरमाह—

सू. नानुमानमतच्छब्दात् ॥ ३ ॥

अनुमानं प्रधानं न द्युभ्वाद्यायतनं भवति। कुतः? अतच्छब्दात् प्रधानप्रतिपादकशब्दाभावात्। "यस्सर्वज्ञस्स सर्ववित्" इति श्रुत्युक्त सर्वज्ञत्वादि धर्माणां अचेतनप्रधान वाच्यासत्वात्। सर्व-कारण सर्वाधिष्ठान परशिवस्यैव द्युभ्वाद्यायतनत्वम्।

नन्वचेतनत्वात् प्रधानस्य तदायतनत्वाभावेऽपि जीवस्य किं न स्यादि-त्याशंक्याह—

सू. प्राणभृच्च ॥ ४ ॥

प्राणभृज्जीवोऽपि द्युभ्वाद्यायतनो न भवति। अतच्छब्दादिति पूर्वोक्त हेतुरेवानुकृष्यते। यद्यपि जीवस्य चैतन्यमात्मशब्दवाच्यत्वं च दृश्यते; तथापि "एषोऽणुरात्मा चेतसा वेदितव्यः" "वालाग्रशत-भागस्य शतधा कल्पितस्य च। जीवो भागस्सविज्ञेयः" इत्यादि श्रुतिषु जीवस्य परिच्छिन्नत्वादि व्यपदेशादेवातच्छब्दत्वं सर्वव्यापक स्वस्वातन्त्र्यशक्तिविशेषस्यैव द्युभ्वाद्यायतनत्वम्।

हेत्वन्तरमाह—

सू. भेदव्यपदेशाच्च ॥ ५ ॥

इतश्च जीवो द्युभ्वाद्यायतनो न भवति । कुतः? भेदव्यपदेशात्; भेदव्यपदेशः तस्मादित्यर्थः "तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ" इत्यादौ जीवब्रह्मणोः ज्ञातृज्ञेयत्वादिभिः स्वाभाविक-भेदस्य व्यपदेशात् । किञ्चिज्ज्ञस्य जीवस्य प्राणभृतः मुमुक्षुत्वात् ज्ञातृत्वं, ब्रह्मणः ज्ञेयत्वं, तस्यैव द्युभ्वाद्यायतनत्वं न जीव-स्येत्यर्थः ।

पुनश्शिवस्यैव द्युभ्वाद्यायतनत्वमित्याह—

सू. प्रकरणात् ॥ ६ ॥

प्रकरणं तावत् परशिवब्रह्म एवेदम् । "तस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा श्रुतेः जीवप्रधानादीनां ज्ञानेन सर्वज्ञानासम्भवात् तेषां सर्वोपादानत्वाभावात् परमशिवज्ञानेन सर्वविज्ञानसम्भवात् तस्य सर्वजगदुपादानत्वात् । दर्शपूर्णमासादि प्रकरणपठित "समिधो यजति" इत्यादि वाक्यानामिव परशिवब्रह्मप्रकरणपठित भेदाभेदप्रतिपादक समस्तवेदान्त वाक्यानां परशिवपरकत्वात् शिवप्रकरणमेवेदम् ।

ननु "नेऽह नानास्ति किञ्चन" इत्यादि श्रुत्या सर्वप्रपञ्चनिषेधस्य अवगम्यमानत्वात् सर्ववेदान्तानामुपक्रमोपसंहारादि षड्विधलिङ्गतात्पर्येण निर्विशेषब्रह्म परत्वमेवेति चेन्न । "नेऽह नानास्ति किञ्चन" इति

श्रुत्या सर्वस्य शिवात्मकत्व बोधनात् न प्रपञ्च निषेधोऽभ्युपगम्यते । अन्यथा "आत्मैवेदं जगत्सर्वं" "सदेव सौम्येदमग्र आसीत्" "ज्ञाऽज्ञौ द्वावजावीशानीशौ" "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतीनामप्रामाण्यं स्यात् । तस्मात् निर्विशेषब्रह्माद्वैतवादोऽवैदिकः ।

ननु "एकमेवाद्वितीयं ब्रह्म" इत्यादिना ब्रह्मणः स्वगत सजातीय विजातीय भेदत्रयरहितत्वस्य सिद्धत्वात् कथमवैदिक इति चेन्न । तस्याः "सर्वं शिवमयंजगत्" "सर्वं खल्विदं ब्रह्म" "लिङ्गमध्ये जगत्सर्वं त्रैलोक्यं सचराचरम्" इत्यादि वाक्यानामिव शिवस्य सर्वजगदात्मकत्वे तात्पर्यात् । अन्यथा भवदभिमतार्थस्य एकेनैवपदेन निर्वाहे पदद्वयस्यानर्थक्यं स्यात् । न च तवाप्येतत्समानमिति वाच्यम् । पदद्वयस्य "सर्वं शिवमयं जगत्" इत्यस्मिन्नर्थे आदरातिशयार्थत्वात् ।

किञ्च—"शिव एको ध्येयश्शिवङ्करः सर्वमन्यत्परित्यज्य" "ज्ञात्वा शिवं शान्तमत्यन्तमेति" इत्याभ्यां श्रुतिभ्यां शिवशब्दवाच्य स्वप्रकाशिता शक्तिविशिष्टस्यैव ब्रह्मणः ध्येयत्व ज्ञेयत्वदर्शनात् । तद्ज्ञानस्यैव अत्यन्तशान्तिहेतुत्वव्यपदेशात् "ईशं ज्ञात्वा अमृता भवन्ति" इति श्रुत्या ईशितृत्वशक्तिविशिष्टस्य ज्ञानादमृतत्वश्रवणात्" "ज्ञाननिर्मथनाभ्यासात् पाशं दहति पण्डितः" इत्यादिना शिवज्ञानस्यैव मुक्तिहेतुत्वात् निर्विशेष निश्शक्तिक ब्रह्मज्ञानस्याप्रयोजकत्वात् शुभ्वाधायतनं परमशिव एवेति सिद्धम् ।

अपि च परशिवपरत्वे हेतुमाह—

सू. स्थित्यदनाभ्यां च ॥ ७ ॥

द्युभ्वाद्यायतनं परशिव एव, कुतः? स्थित्यदनाभ्यां च। स्थितिश्च अदनश्च, स्थित्यदने, ताभ्यामिति, स्थित्यदनयोः पञ्चम्यन्तपदोपस्थाप्यत्वम् "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचकाशीति" अस्मिन्मन्त्रे कर्मफलभोक्तृत्वं जीवस्य, तत्साक्षित्वेन स्थितिमत्वं च परमेश्वरस्य निर्दिश्यते। तस्माद्युभ्वाद्यायतनं परमेश्वर एव भवति। अन्यथा शिवजीवयोर्भेदप्रतिपादकश्रुतेरसङ्गतत्वं स्यादित्यर्थः।

ननु "एक एव रुद्रो न द्वितीयाय तस्थे" इत्याद्यनेक श्रुतिभिः सर्वप्रपञ्चनिषेधपूर्वक ब्रह्माद्वैतस्य व्यवस्थापितत्वात्। "द्वासुपर्णा सयुजा" इति श्रुतिसिद्ध शिवजीवयोर्भेदस्य न पारमार्थिकत्वमिति चेन्न। सृष्टेः पूर्वं अण्डरसन्यायेन सर्व प्रपञ्चस्य अविभागपरामर्शदशायां व्यक्तमूर्तामूर्तोभयप्रपंचाभावात् अद्वितीयत्व निर्गुणत्व प्रतिपादक श्रुतीनां तद्दशापरत्वं वक्तव्यम्। भेदप्रतिपादक श्रुतीनां विभागदशापरत्वं इत्यस्मिन्नाशये "नान्यः कश्चिन्मर्त्यो व्यतिरिक्तः" "आत्मा वा इदमग्र एवासीत् नान्यत् किञ्चनमिषत्" "सदेव सौम्येदमग्र आसीत्" "यदा तमस्तन्न दिवा न रात्रिः न सन्नचा सच्छिव एव केवलः, अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यथर्वशिरस्तैत्तिरीय, छान्दोग्य श्वेताश्वतरादिश्रुतयस्सन्ति।

ननु सृष्टेः प्राक् जगत्कारण प्रकृतेः परशिवसद्भावात् कथं तदाद्वैतमिति चेन्न । "देवात्मशक्तिं स्वगुणैर्निगूढां", "पराऽस्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि श्रुतिषु शक्तिशक्तिमतोरभेददर्शनात् । उक्तं च वायुसंहितायां "शक्त्यादि च पृथिव्यन्तं शिवतत्त्वसमुद्भवम् । तेनैकेन तु तद्व्याप्तं मृदा कुम्भादिकं यथा" "परास्य विविधा शक्तिः प्रबोधानन्दरूपिणी । एकानेक-स्वरूपेण भाति भानोरिव प्रभा" इति वदन्ति च अभियुक्ता अपि—
"शक्त्योश्च जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः । शक्तिस्तु शक्तिमद्रूपात् व्यतिरेकं न गच्छति । तादात्म्यमनयोर्नित्यं वह्निदाहिकयोरिव । शक्तिशक्तिमतोर्यस्मादभेदस्सर्वदा स्थितः । अतस्तद्धर्मधर्मित्वात् पराशक्तिः परात्मनः । न वह्नेर्दाहिका शक्तिर्व्यतिरिक्ताविभाव्यते" इति ।

तथा च जगदाकारस्वविमर्शशक्तेः शिवाभिन्नत्वात् तादृशशक्तिः परिकल्पितस्वसंकोचापरपर्यायाख्यात्यात्मक अविद्याशक्तिविशिष्टस्य सच्चिदानन्दात्मनः जीवत्व किञ्चिज्ज्ञत्व अणुत्वादयस्स्वाभाविकधर्माः सृष्ट्युत्तरकालावच्छेदेनेति ज्ञायन्ते । तथा च भेदप्रतिपादक श्रुतीनां एतत्कालपरत्वं वक्तव्यम् । एवं च द्युभ्वाद्यायतनत्वस्य जीवस्य वक्तव्यत्वे भेदश्रुतेरसङ्गतिस्स्यादित्यतो । महेश्वर एव द्युभ्वाद्यायतनम् ।

मुक्तोपसृप्यत्वेन निर्दिष्टस्य द्युभ्वाद्यायतनस्य परशिवस्य साक्षात्कारवतः निरतिशयसुखं दर्शयितुमाह—

## सू. भूमासंप्रसादादध्युपदेशात् ॥ ८ ॥

"यो वै भूमा तत्सुखमि"ति भूम्नस्सुखस्वरूपं श्रूयते। तल्लक्षणन्तु "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यनेन निर्दिश्यते। अत्र भूमा प्राण एव भवितुमर्हति। तत्रापि सुखस्वरूपस्य सत्वात् "प्राणो वा अमृत"मिति श्रवणात्। "यत्र नान्यत्पश्यति" इति श्रुतिविहित लक्षणमपि सुषुप्त्यवस्थायां सर्वव्यापार निवृत्तिदर्शनात् सम्भवति।

ननु "श्रुतं ह्येव भगवद्दृशेभ्यस्तरति शोकमात्मविदि"ति "सोऽहं भगव शोचामि तं मा भगवांश्शोकस्य पारं तारयतु" इति ब्रह्मलिङ्गबाहुल्यात् महेश्वर एव भूमा इति चेन्न। "प्राणो ब्रह्मेति" नारद-सनत्कुमारप्रश्न प्रतिवचन द्योतनात्। तथा हि अस्ति भगवो नाम्नो भूयः" इति। "वाग्वाव नाम्नो भूयसि" इति। "अस्ति भगवो वाचो भूयः" इति। मनो वाव वाचो भूय" इति च भूयः प्रश्नप्रतिवचनाभ्यां प्राण एवात्र भूमशब्दनिर्दिष्टः इति चेदुच्यते।

भूमा परमेश्वर एव। कुतः? संप्रसादादध्युपदेशात्। सम्प्रसादस्सुषुप्तिः "स वा एष एतस्मिन् सम्प्रसादेरत्वाचरित्वा" इति श्रुत्या सम्यक् प्रसादोऽस्मिन्निति संप्रसादः इति व्युत्पत्या च सम्प्रसाद-स्सुषुप्त्यवस्था, तस्यां च प्राणो जगर्तीति संप्रसादः प्राण इत्यभिप्रेतः; तस्मात् अधि प्राणादूर्ध्वं उपदेशात् कथनात् प्राणोपदेशानन्तरं

"एष तु वाति वदति, यस्सत्येनाति वदति"। इत्यत्र तु शब्देन प्राणाद्यतिवादित्वं व्यावर्त्य सत्यशब्दवाच्य परमात्मवादस्य अतिवादत्वं उक्त्वा भूमानमवतारयति। किञ्च—"तरति शोकमात्मवित्" इत्यादिना आत्मज्ञानेन मोक्षस्य उपदिश्यमानत्वात्, जडप्राणवायोर्मोक्षानुपयुक्तत्वात् आत्मशब्दस्य परशिवप्रसिद्धत्वात् "ब्रह्मविदाप्नोति परं" इत्यादि श्रुतिषु शिवज्ञानस्यैव मोक्षोपदेशाच्च भूमा परमेश्वर एव।

भूमशब्दवाच्यत्वं परमेश्वरस्यैवेत्यत्र हेत्वन्तरमाह—

सू. धर्मोपपत्तेश्च ॥ ९ ॥

भूम्नि श्रूयमाणधर्माणां परमात्मन्युपपद्यमानत्वात् परशिव एव भूमा "यत्र नान्यत्पश्यति नान्यच्छृणोति, नान्यद्विजानाति स भूमा" इत्यादिना सृष्टेः पूर्वं सर्वव्यवहाराभावादि धर्माणां शिवस्योपपद्यमानत्वात् "यत्रत्वस्य सर्वमात्मैवाभूत्। तत्केन कं पश्येत्, केन किं वदेत्" इत्यादि श्रुत्यन्तरेण सर्वं शिवात्मकज्ञानवतां प्राकृतप्रपञ्च व्यवहाराभावो मुक्तजीवधर्म इत्यवगम्यते"। अत एव "तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति शिवोपासकस्य शुद्धचित्तस्य आत्यन्तिक पाशनिवृत्तिपूर्वक शिवसायुज्यं नदीसमुद्र दृष्टान्तेन निर्दिष्टम्। सर्वप्रपञ्चस्य शिवत्वेन पश्यतां शिवातिरिक्तस्य कस्यचिदभावात् प्रपञ्चनिषेधक श्रुतीनामपि प्रामाण्यमवगन्तव्यम्।

ननु "यावन्नविमोक्षेदसंपत्से" इति वाक्येन जीवन्मुक्तस्य विदेहमुक्तिपर्यन्तं प्रपञ्चभोग्यपदेशात्। कथं जीवन्मुक्तानां प्रपञ्च-

निषेध उपपद्यते इति चेन्न। जीवन्मुक्तानां शिवज्ञानिनां सर्वस्य शिवात्मकत्वेन दर्शनात्। तेषां देहाद्यन्तः करणसद्भावेऽपि सर्वशिवात्मक ज्ञानसद्भावात्। जगदात्मक शिवोऽहमिति विद्वदनुभवाच्च। प्रपञ्चस्य शिवातिरिक्तत्वेन निषेधानुभवस्तेषां युज्यते। "यदा त्वन्मय एवाहमिति भावनया त्वयि। प्रलीनाहंकृतिग्रन्थिः पश्यत्येवत्वदात्मताम् ॥

ननु शिवोऽहमिति वृत्तेः शक्तिसंकोचरूपबन्धतिरोधायकत्वे भवदुक्तरीत्या तस्यापि तिरोधायकान्तरं स्वीकरणीयम् इत्यनवस्था स्यात्, अन्यथा द्वैतापत्तेः इति चेन्न। तादृश चित्तवृत्तेः चित्तस्वरूपत्वात्। तस्य चिति स्वरूपत्वात्।

उक्तं च शिवसूत्रे—"चित्तमात्मे"ति स्पन्दसूत्रेऽपि "चितिरेव चेतनपदादवरूढा चेत्यसङ्कोचिनी चित्तम्" इति। 'न हि दृष्टेऽनुपपन्नं' इति न्यायेन जीवन्मुक्तानां सर्वशिवात्मकदृष्टिर्नानुपपद्यते। शिवस्य प्रपञ्चनिरूपिताभिन्ननिमित्तोपादानकारणत्वात्। जगदभिन्न शिवोऽहमिति दृष्टिस्सम्भवति। "यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति" इति भूम्नः सुखत्वं दर्शितम्। यो वै भूमा तदमृतमिति अमृतत्वमपि परमशिवासाधारण धर्मः। किञ्च—"स भगवः कस्मिन् प्रतिष्ठितः स्वे महिम्नीति। आत्मैवेदं सर्वं आत्मनः प्राणाः" इत्यादिना सृष्ट्युत्तरकाले तस्यैव स्वशक्त्युन्मेषरूपे जगति स्वमहिम्नि प्रतिष्ठितत्व सर्वकारणत्व सर्वात्मकत्वादि धर्माणां कथनात् भूमशब्दनिर्दिष्टः परशिव

एव । एतादृशधर्मविशिष्ट भूम्नः ध्यानादिकं गुरुमुखाद्विदित्वा यः अनुतिष्ठति तदा शक्तिविकासरूपमुक्ति भवति । उक्तं च—

श्रीकुलरत्नमालायां—

यदा गुरुवरस्सम्यक्कथयेत्तन्नसंशयः ।
मुक्तस्तेनैव कालेन यत्र तिष्ठति केवलम् ॥

किं पुनश्चैकतानस्तु परे ब्रह्मणि यस्सुधीः ।
क्षणमात्र स्थितो योगी स मुक्तो मोचयेत्प्रजाः ॥

मृत्युजित्यप्युक्तम्—

निमेषोन्मेषमात्रन्तु तत्त्वं यद्युपलभ्यते ।
तदेव किल मुक्तोऽसौ न पुनर्जन्मचाप्नुयात् ॥

उक्तं च कुलसांसीऽपि (?)

अहो तत्त्वस्य माहात्म्यं ज्ञातमात्रस्य सुन्दरम् ।
श्रोत्रान्तरन्तु संप्राप्ते तत् क्षणादेव मुच्यते ॥ इति ।

ननु तदानीं शरीरादिकमप्यस्य जीवन्मुक्तस्य कथं न निवर्तते इत्याशंकायामपि "नैसर्गिकः प्राणसम्बन्धः" इति शिवेन सूत्रितम् । तथा च भूमपदवाच्य लिङ्गरूप परमशिवार्चनार्पणानुभवादिना सङ्कुचित चित्तं कुण्डल्यपरपर्यायं विकासयन् सच्चिदानन्दभाग्भवतीत्यर्थः ।

ब्रह्मणः परमशिवस्य सर्वव्यापकत्वमुपदिश्य अक्षरशब्दवाच्यत्व-मप्याह—

सू. अक्षरमम्बरान्तधृतेः ॥ १० ॥

"स होवाचैतद्वैतदक्षरं गार्गि ब्राह्मणं अभिवदन्त्यस्थूल-मनण्वदीर्घमतो हि तमस्नेहमच्छायम्" इत्यत्र यदक्षरमुक्तं तत्परब्रह्म अम्बरान्तधृतेः अम्बरान्तस्य स्वशक्तिप्रकटीकृतस्य विश्वस्य धृतेः धारणात्। यद्यपि "ओमित्येकाक्षरं ब्रह्म" "ओंकार एवेदगुँ सर्वम्" तदक्षरसमाम्नायः" इत्यादिषु वर्णस्य ओंकारस्य ब्रह्मात्मकत्व सर्वात्मकत्वादि दर्शनात् अक्षरशब्दवाच्यत्वं ओंकारस्य। "पुरुषोऽक्षर उच्यते" इत्यादिना पुरुषस्यापि संभवति। तथाप्यत्र पृथिव्याद्याकाशान्तस्य सर्वप्रपञ्चस्य धारकत्वासम्भवात् "ओंकार एवेदगुँ सर्वम्" इति श्रुतेः सर्वात्मकब्रह्मवाचकत्वेन स्तुत्यर्थत्वं वाच्यम्।

अम्बरान्तधृतेः प्रधानेऽपि सत्वात् तत्रातिव्याप्तिमाशङ्क्य परिहरति—

सू. सा च प्रशासनात् ॥ ११ ॥

सा आकाशान्तधृतिः परशिवस्यैव, कुतः? प्रशासनात्, नियमनात्। न ह्यचेनप्रधाने एतादृशी नियमनशक्तिः सम्भवति। दृष्टं च लोके राजादिषु नियमनशक्तिमत्वम्। वेदेऽपि "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना उक्तं प्रशासनं परशिवादन्यत्र नैव सम्भवति। जीवोऽपि नाक्षरशब्द-

वाच्यः । तस्य सर्वज्ञत्वादसर्वशक्तिकत्वात् जगत्प्रशासनशक्तिमत्त्वा-सम्भवात् । सर्वशक्तिकस्य सर्वज्ञस्य परमेश्वरस्य तु सर्वनियामकत्वात् सम्भवति । सर्वनियामकत्वं च उक्तम्—"ईशानस्सर्वविद्याना-मीश्वरस्सर्वभूतानां" इत्यादिना सर्वशक्तिकत्वं च । "पराऽस्य शक्ति-र्विविधैव श्रूयते" इत्यादिना उक्तम् । उक्तं च श्री पौष्करावां-"चिन्तामणौ स्वरूपेण न किञ्चिदुपलभ्यते । अथ चाभिमतं सूते ब्रह्मैवं सर्वशक्तिकम्" ज्ञानसम्बोधेऽपि—"स्वभावादेकरूपापि नानात्वं प्रतिपद्यते । ज्ञानस्य शक्तिसंकल्पैर्लक्ष्मीश्चिन्तामणेरिव" ॥ अनेन सूत्रेण पृथिव्यादाकाशान्तप्रपञ्चाधिष्ठानशिवस्य नियमनशक्तिमत्त्व-मुपदिष्टम् । निश्शक्तिकस्य धृत्यसम्भवात् । स्वाभाविकी ज्ञानबल-क्रिया च" इत्यादिना शक्तेस्स्वाभाविकत्वोपदेशात् । ब्रह्मणो निर्विशेषत्ववादोऽप्ययुक्तः । दाहानुकूल शक्तेर्वह्नेरविभक्तत्वेऽपि "वह्निर्दहती"त्यत्र भेदव्यवहारवत् शक्तिशक्तिमतोर्भेदाभेदस्सिद्धः ।

पुनर्हेत्वन्तरमाह—

सू. अन्यभावव्यावृत्तेश्च ॥ १२ ॥

परशिवस्यैव अक्षरशब्दवाच्यत्वं तस्यैवाम्बरान्तधृतित्वं नान्यस्य कस्यचित् । "अन्यभावव्यावृत्तेः" अन्यस्य प्रधानादेः विभावो धर्मः तस्य व्यावृत्तेः अचेतनप्रधानधर्मभिन्न द्रष्टृत्वादि धर्मश्रवणात् । तथाहि-"तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतंमन्तृ अविज्ञातं

विज्ञात्" इति तस्मात् अक्षरशब्दवाच्यशिवलिङ्गस्यैव जन्मकर्मनिवर्तकत्वात्। तदेवोपास्यं स्वाज्ञाविनाभूतं शुद्धमानसैरित्यर्थः।

शिवस्य अनुग्रहेण उपासकस्य शिवसाक्षात्कारो भवतीत्युपपादयितुमधिकरणान्तरमारभते—

सू॰ ईक्षति कर्मव्यपदेशात्सः ॥ १३ ॥

"यः पुनरेतं त्रिमात्रेणे "त्यादि श्रुतौ परं पुरुषमभिध्यायीतेत्यत्र अभिध्यानविषयत्वेनोक्तः पर शब्दवाच्यः शिव एव। न हिरण्यगर्भो न वा नारायणः। "एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इति वाक्ये जीवघनात् जीवसमष्ट्यात्मक हिरण्यगर्भात् परस्य ध्येयत्वोक्तेः। न तस्य परत्वं नारायणस्यापि न युज्यते। ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते" इत्यत्र ब्रह्मविष्णुरुद्रादीनां कार्यकोटिप्रविष्टत्वदर्शनात्।

ननु "नारायणं महाज्ञेयं विश्वात्मानं परायणम्"। इत्यादिना तस्य विश्वात्मकत्व श्रवणात्, पुरुषशब्दवाच्यत्वाच्च। तस्यैवाभिध्यानविषयत्वमस्तु" इति चेन्न। "एतस्मात् जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इत्यत्र जीवघनात् हिरण्यगर्भात्, परात् उत्कृष्टात् नारायणात् परं उत्कृष्टं, पुरि दहरपुण्डरीके शयं उपास्यत्वेन वर्तमानमत एव पुरुषं परशिवं "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षम्" इत्यादि श्रुतेः। शिवोपासकः ईक्षति पश्यति इति निर्देशात्, न नारायणस्योपास्यत्वं "एक एव शिवः साक्षात्ततोऽन्यत्सकलं मृषा। तस्मात् सर्वान् परित्यज्य हेयान्

विष्ण्वादिकान् सुरान् । शिव एव सदा ध्येयः सर्वसंसारनाशकः ।" इति श्रुतेः । "सर्वमन्यत्परित्यज्य शिव एको ध्येयः शिवंकरः" इति श्रवणाच्च । न नारायणस्योपास्यत्वं "नारायण परं ब्रह्म तत्त्वं नारायणः परः" इत्यादौ परमशिवोपासकस्य नारायणस्य श्वेतकेत्वादौ इव औपचारिकत्वेन ब्रह्मत्वेनोपदेशात् "नारायणपरंब्रह्म" इत्यत्र नारायणात् यत्परं उत्कृष्टं तत् ब्रह्म इत्युपदिशति । "तद्विष्णोः परमं पदम्" इति वाक्येऽपि तस्य श्रेष्ठत्वावगमात् । नारायणादधिकं शिवपदं मुमुक्षुभिरुपास्यम् ।

किञ्च विश्वात्मानं परायणमित्युक्त विश्वात्मकत्वमपि नारायणस्य उमाशक्त्यंशत्वादुपपन्नं भवति । "पुरुषो वै रुद्रः, वासुदेवः परा प्रकृतिः" ।

"एकैव शक्तिः परमेश्वरस्य भिन्ना चतुर्धा विनियोगकाले ।
भोगे भवानी पुरुषेषु विष्णुः क्रोधे च काली समरे च दुर्गा ।"

इत्यादिना शिवशक्त्यंशत्वं स्पष्टमुक्तम् । तस्मादीक्षितिकर्मतया उपदिश्यमानः परशिव एव सर्वोपास्यः ।

परशिवस्य भक्तानुग्रहाय दहरात्मकत्वमित्याह—

सू. दहरउत्तरेभ्यः ॥ १४ ॥

"यदिदमस्मिन्" इत्यदि श्रुतौ अन्तर्धार्यत्वेनोक्तः दहराकाश-शब्दवाच्यं वस्तु परशिव लिङ्गमेव । ननु आकाशस्य भूताकाशे-

प्रसिद्धत्वात् । सूचीरन्ध्रादिवत् तस्य दहरत्वात् सर्वव्यापकस्यापि आकाशस्य अन्तः प्रविष्टत्वेन दहरवाच्यत्वं भूताकाशस्य । "यदिदमस्मिन् ब्रह्मपुरे दहरं" इत्यादिना जीवे ब्रह्मपुरमिति ज्ञायमानत्वात् "यस्यात्मा शरीर"मिति श्रवणात् "वालाग्रशतभागस्य शतधा कल्पितस्य च जीवो भागः" "एषोऽणुरात्मा चेतसावेदितव्यः" इत्यादिना जीवस्य क्षुद्रपरिमाणकत्वदर्शनात् दहरशब्दवाच्यत्वमस्तु इति चेत्—उत्तरेभ्यः हेतुभ्यः इति शेषः । "एष त आत्मा अपहतपाप्मा विजरो विमृत्यु-र्विशोको विजिघित्सोऽपिपासः । सत्यकामः सत्यसङ्कल्पः" इति वाक्ये शेषप्रसिद्धहेतुभ्यः । तथा च अपहतपाप्मत्वादीनां धर्माणां भूताकाशजीवयोरनुपपद्यमानत्वात् न तयोर्दहरवाच्यत्वमित्यर्थः ।

शिवस्यैव दहरशब्दवाच्यत्वं इत्यत्र उत्तरहेतुघटक हेतुद्वयमाह-

सू. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥

गतिश्च शब्दश्च गतिशब्दौ ताभ्यामित्यर्थः । "इमाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्ति अनृतेनहि प्रत्यूढा" इति वाक्यशेषोक्ताभ्यां दहराकाशकर्मकगति ब्रह्मलोकशब्दाभ्यां दहरवाच्यं शिवलिङ्गमेव । तथा ह्येतद्दृष्टं श्रुत्यन्तरे—"एषौ सौ परमो हंसो भानुकोटिप्रतीकाशो येनेदं व्याप्तं तस्याष्टधा वृत्तिर्भवति पूर्वदले पुण्यमतिः आग्नेये निद्रालस्यादयो भवन्ति । याम्ये क्रौर्यमतिः नैरृते पापे मनीषा, वारुण्यां क्रीडा, वायव्ये गमनादौ बुद्धिः, सौम्ये रतिप्रीतिः ईशान्ये द्रव्यादानं, मध्ये वैराग्यं, केसरे जाग्रदवस्था, कर्णिकायां स्वप्नः

लिङ्गे सुषुप्तिः " इत्यत्र हृत्पुण्डरीकान्तर्वर्ति दहराकाशरूप परशिवलिङ्ग-गमनं दृष्टमित्यर्थः । लिङ्गब्रह्मशब्दयोः घटकुम्भादिवत् पर्यायत्वात् । प्रत्यहं सुषुप्तौ प्रजाशब्दवाच्य जीवानां ब्रह्मणि गमनं दृष्टम् । तदेव दहराकाशपदवाच्यस्य ब्रह्मत्वे लिङ्गं हेतुः ब्रह्मलोकमित्यत्रापि ब्रह्मैव लोकमित्यर्थो बोध्यः । अन्यथा महाकैलासाभिधानं ब्रह्मणः शिवस्य लोकं प्रति प्रत्यहं गमनासंभवात् अहरहर्गच्छन्ति " इत्यस्य अप्रामाण्यं स्यात् — " एष ब्रह्मलोकस्सम्राडिति होवाच " इत्यादौ ब्रह्माभिन्नोलोक इत्यवगमाच्च । तथा च दहराकाशवाच्य अन्तर्लिङ्ग-धारणापरपर्याय ज्योतिर्लिङ्गानुसन्धानं प्रत्यहं कर्तव्यमिति—

अस्मिन्नर्थे हेत्वन्तरमाह—

**सू. धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १६ ॥**

धृतेः सर्वलोकविधारकत्वात् " अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय " इति श्रुतेः । अस्य सर्वलोकविधारणरूपस्य महिम्नः अस्मिन् प्रकृत दहरपदवाच्ये उपलब्धेः, उपलभ्यमानत्वात् । " एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः " इत्यत्र सर्वलोकविधारणरूपमहिमा दृश्यते । स च शिवादन्यत्र न सम्भवती-त्यतो दहराकाशवाच्यं शिवलिङ्गमेव ।

किञ्च—" दहरोऽस्मिन्नन्तराकाशः " इत्युक्त दहराकाशवाच्यः परशिव एवेत्यत्र हेत्वन्तरमाह—

सू. प्रसिद्धेश्च ॥ १७ ॥

श्रुत्यन्तरं दहराकाशः परशिव एवेति प्रसिद्धेरित्यर्थः । तथा हि "दहरं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थं । तत्रापि दहं गगनं विशोकस्तस्मिन् यदन्तस्तदुपासितव्यं" इत्यत्र "हृत्पुण्डरीकं विरजं विशुद्धं" इत्यारभ्य "उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं, ध्यात्वा मुनिर्गच्छति भूतयोनिं" इत्यत्रापि प्रसिद्धत्वात् ।

ननु 'दहराधिकरणे विषयत्वेन गृहीत दहरोऽस्मिन्नन्तराकाशः' इति विषयवाक्येन दहराकाशवाच्यत्वं शिवस्य ज्ञायते । पूर्वोक्त-कूचीरुद्र कैवल्यवाक्याभ्यां दहरपुण्डरीक मध्यवर्तित्वेन ज्योतिर्लिङ्ग-स्योपास्यत्वं प्रतीयते । तथा च विरुद्धार्थप्रतिपादकवाक्यानां अप्रामाण्यापत्तिरिति चेन्न । दहराकाशशब्देन चिदाकाशशक्तिरुच्यते । "आकाशशरीरं ब्रह्म" सत्यात्मप्राणारामं मन आनन्दं" इत्यादिना चिदाकाशशरीरत्वस्योपदेशात् शक्तिशक्तिमतोरभेदात् । उक्तं च कूर्मे

केषां भगवती देवी शङ्करार्धशरीरिणी । शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् ॥ कूर्मे आह—"रहस्यमेतद्विज्ञानं जन्तूना-मेकमोचनं व्योमसंज्ञा पराकाष्ठा ज्ञानरूपातिलालसा" स्वाभाविकी च तन्मूला प्रभा भानोरिवामला । एका माहेश्वरीशक्तिरनेकोपाधियोगतः ॥ परापरेण रूपेण क्रीडते तस्य सन्निधौ । सेऽयं करोति सकलं पश्य-कार्यमिदं जगत् ॥ एका शक्तिश्शिवो ह्येकश्शक्तिमानुच्यते शिवः ॥

शक्तिशक्तिमतोर्भेदं वदन्ति परमार्थतः । अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥

तत्रैव देवीवाक्यमपि—"मां विद्धि परमां शक्तिं महेश्वरसमाश्रयाम् । अनन्यामव्ययामेकां यां पश्यन्ति मुमुक्षवः ॥ अहं वै सर्वभूतानामात्मा सर्वान्तरा शिवा । शाश्वतैश्वर्यविज्ञानमूर्तिस्सर्वप्रवर्तिका " इत्यादिना । कूर्मपुराणे नारायणेन " घृतकाठिन्यवन्मूर्तिः सच्चिदानन्दलक्षणा । शिवाभिधेन सैवास्ति शिव एव हि सा सदा " इति सूतगीतायां च द्वैताद्वैतात्मकशिवाद्वैतस्य प्रतिपादितत्वात् शिवस्य दहरात्मकत्व दहरमध्यवर्तित्वयोरविरोधात् दहराकाशमध्यवर्तित्वेन प्रसिद्धेरित्यर्थः ।

अन्यव्यावृत्तिपुरस्सरं पुनर्विवेचयति—

**सू. इतर परामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥**

इतरस्य शिवादन्यस्य जीवस्य परामर्शात् "अथ च एष सम्प्रसादो अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेण अभिनिष्पद्यते, एष आत्मेति होवाच तदमृतमभयं" इति वाक्ये संप्रसाद शब्दवाच्य सुषुप्त्यवस्थावज्जीवस्य उपस्थितेः । सः जीव एव दहराकाशः तस्यैव हृत्पुण्डरीकान्तरुपास्यत्वं " इति चेन्न । असंभवात् । अपहतपाप्मत्व सत्यसंकल्पत्वादि धर्माणां तत्रासंभवादित्यर्थः ।

असम्भवेन हेतुना जीवाशंकावारणेऽपि पुनरुत्तरप्रजापतिवाक्ये अपहतपाप्मत्वादिधर्मकः जीव एवेति अवस्थात्रयवर्तित्वलक्षणेन हेतुना आशङ्क्य संकुचित चिति रूप चित्तविशिष्ट संसारिणो जीवस्य विकसित स्वशक्तिदशायां अपहतपाप्मत्वादयो धर्माः सम्भवन्तीति समाधत्ते—

सू. उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

उत्तरात्, प्रजापतिवाक्यात् जीव एव दहराकाशः। उत्तरवाक्ये "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसंकल्पस्सोऽन्वेष्टव्यस्सविजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति स सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति" इति जीवस्य अपहतपाप्मत्वादीनां सम्भवात्। य एषो अक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच "य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाच "तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नः सुप्तं न विजानात्येष आत्मेति होवाच" इत्युक्त अवस्थान्तरवर्तित्वस्य जीवस्यैवोपपद्यमानत्वात् स एव दहराकाशः—उपास्यः तस्यैव शरीरात्समुत्थितस्य परं ज्योतिः प्रत्यभिधानात् इति चेन्न। "आविर्भूतस्वरूपस्तु—तु शब्दो पूर्वपक्षनिरसनार्थः, आविर्भूतं विकल्पक्षयाद्युपायगर्भलिङ्गधारणात्मक शिवदीक्षया विकसितं स्वस्य आत्मीयस्य रूपं पञ्चकृत्यकारित्वं, यस्य सः

मुक्तः अपहतपाप्मत्वादि पारमेश्वरधर्मानर्हति अर्थात् शिवभावापन्न जीवन्मुक्तं शिवरूपतया "एष संप्रसादो" इत्यादि श्रुतिर्व्याचष्टे । तस्यैवापहतपाप्मत्वादि धर्माणां सम्भवात् । स्वशक्तिसंकोचरूप अख्यात्यात्मक बन्धविशिष्टस्य जीवस्य पारमेश्वर धर्मासम्भवात् जीवः उत्तरवाक्याद्दहराकाशः इति वक्तुं शक्यते जीवो यदाविर्भूत स्वरूपो भवति तदा तस्य शिवरूपत्वात् तादृशस्यैव रूपं उद्दिश्यैव "अयमात्मा अपहतपाप्माविजरो विमृत्युः" इत्यादि श्रुतिः न तु जैवरूपं अपहतपाप्मत्वादिकं व्यनक्ति । आविर्भूतस्वरूपस्तु" इति वदता भगवता व्यासेन भावी मिथ्यात्ववादः खण्डित इति स्फुरति । अयमत्राशयः । आस्माकीन सिद्धान्ते व्यक्तो भवति । जीवो नाम परशिवस्य स्वलीलास्वातन्त्र्यसंकुचित इच्छादि शक्तिविशिष्टत्वदशायां मलावृतत्वात् शिव एव संसारीजीव इत्युच्यते । तथा च अप्रतिहत स्वातन्त्र्यरूप इच्छाज्ञानक्रियाशक्तीनां शिवासाधारणानां क्रमेण संकोचप्राधान्यप्रयुक्त आणवमायीयकार्ममलत्रयरूपत्वात् । तथा सर्वकर्तृत्व सर्वज्ञत्व पूर्णत्व नित्यत्व व्यापकत्व शक्तीनां यथाक्रमं संकोचप्राधान्येन कला-विद्या-राग-काल नियतिरूपत्वात् । "सर्वस्वतन्त्रता सर्वज्ञता सम्पूर्णता तथा । नित्यतव्यापिता चेति पञ्चैता शक्तयः प्रभोः ॥ अपि संकोचरहिताः संकुचद् रूपतां गताः । कलाविद्यारागकाल नियत्याख्या क्रमेण ताः ॥" इत्युक्तत्वात् । एतादृश संकुचितशक्तिविशिष्टः मलावृतः जीव इति बोध्यम् । मलत्रयस्यैव बन्धत्वात् तदुक्तं — "ज्ञानं बन्धः" (प्र.सू. २) योनिवर्गः कलाशरीरम् (प्र.सू. ३) इति सूत्रद्वयेन । ज्ञानमत्र नाहं

शिव इति। शिवाभेदस्फुरणावरक स्वस्वातन्त्र्यशक्तिपरिकल्पित-सङ्कोचरूप अख्यात्यात्मक अज्ञानस्वरूपं नाहं पूर्णः इत्यपूर्णं मन्यत्व-रूपाणवमलसहितत्व संकुचितज्ञानम्।

नन्वेतस्य बन्धस्य चित्प्रकाशातिरिक्तत्वे तस्याचेत्य(?)मानत्वात् अन्याभ्युपगत चित्प्रकाशभिन्नमाया प्रकृत्यादेरिवासत्वात्। तदनति-रिक्तत्वे प्रकाशमानत्वेन प्रकाशैकरूपत्वात् कथं जीवस्य बद्धत्वं इति चेन्न।

"चिति संकोचात्मा चेतनोऽपि सङ्कुचित विश्वमयः" (प्र. सू. ४) इति सूत्ररीत्या विश्वशरीरशिवैकरूप एव जीवः। केवलं तन्माया-शक्त्या अनाविर्भूतस्वरूपत्वात् जीवस्य स्वाभाविकबद्धत्व व्यवहारः। आविर्भूत स्वरूपस्तु शिव एव। 'तिरोहित स्वरूपत्वे जीव इति तद्दशायां चिति संकोचरूपचित्तविशिष्टत्वात् जीवस्य स्वाभेदेन हृत्पुण्डरीकादौ शिवलिङ्गधारणवत्वं एतादृश अन्तर्लिङ्गधारणाद्बाह्य-लिङ्गधारणाविनाभूतात् दीक्षागुरुनिर्दिष्टोपायात् चित्तस्य चितिरूपत्वे मुक्तः शिव एव। न हि चित्तस्य चितोरधिष्ठानस्य अन्यथाभाव उपपद्यते, तदतिरिक्तस्य गगनकुसुमायमानत्वात्। उक्तं च अभियुक्तैः —"अख्यातिर्यदि न ख्यातिः ख्यातिरेवावशिष्यते। ख्याति चेत् ख्याति रूपत्वात् ख्यातिरेवावशिष्यते" इति।

शिवसूत्रविमर्शिन्यामपि—"यथा च व्यतिरिक्तस्य मलस्या-नुपपन्नत्वं तथास्माभिः श्रीस्वच्छन्दोद्योते पञ्चमपटलान्ते दीक्षाविचारे

वितत्य(?)दर्शितम् " इति । चित्तस्य चिति सङ्कोचत्वमपि । " चितिरेव चेतनपदादवरूढा चेत्य संकोचिनी चित्तम् ॥ (प्र.सू. ५) इति सूत्रेणोक्तम् । " चित्तमात्मेति " शिवेनापि सूत्रितम् ' पदवाक्य प्रमाणज्ञेन मरितोण्टदार्येणापि शिवजगन्मयस्थले—" पत्रशाखादिरूपेण यथा तिष्ठति पादपः । तथा भूम्यादिरूपेण शिव एको विराजते । " इत्यस्य श्लोकस्य व्याख्यानावसरे शिव एव स्वसमवेत शक्तितादात्म्य-क्रोडीकृतभूम्यादिरूपेण प्रतिस्फुरणतया भातीति सामान्यत उक्त्वा विशेषतश्च धृत्या धरणिः, करुणया जलम्, उज्वलतया तेजः-परमानन्दस्पन्दनयनवायुः, चिद्व्याप्त्या व्योम, चितिसंकोच चित्तविशिष्टो, जीव इति चित्तस्य चिति संकोचरूपत्वमुक्तम् । मायाप्रमातुर्जीवस्य स्वरूपमेव चित्तम् । चित्तस्वरूप एव माया प्रमाता परस्परं साक्षित्वात् । चित्तशक्ति-शक्तिमतोर्भेदाभेदस्य विवक्षितत्वात् । उक्तं च प्रत्यभिज्ञा-सूत्रे—" तन्मयो माया प्रमाता " इति । उक्तं च मोक्ष धर्मे—" चित्तमेव हि संसारो रागादिक्लेशभूषितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते " इति । बौद्धे च—" रागादिमलिनं चित्तं संसारस्त-द्विविक्तता । संक्षेपात्कथितो मोक्षः प्रहीनावरणैर्जनैः ॥ इति । नारद संग्रहे च —" सर्वो विकल्प संसारो नान्यो बन्धो विकल्पतः ॥ इति । एतदभिप्रायेण शिवसूत्रेऽपि चित्तमात्मेत्युक्तम् ।

नन्वेतत् स्वाभाविकपरमेश्वरस्वरूपस्य पञ्चकृत्यकारित्वस्य चित्त-दशायां तिरोहितत्वे संसारित्व दशायां स्वरूपहानिरिति चेत न; संकुचित चिच्छक्तितया संसारिभूमिकायामपि शिववत् किंचित् पञ्चकृत्य

कारित्वस्य दर्शनात् तथापि तद्वत् पञ्चकृत्यानि करोतीति सूत्रेणोक्तम्। आत्मीयपञ्चकृत्यकारित्वस्य तिरोधानदशायां अस्य बन्धः। तदुक्तं तृतीयाध्याये "पराभिध्यानात्तु ततो ह्यस्य बन्धविपर्ययौ" इति। एतादृश चितिसंकोचरूपं चित्तात्मकबन्धस्य दीक्षात्रयविलयत्वे 'परंज्योतिरुप सम्पद्य स्वेन रूपेण अभिनिष्पद्यते।' इति स्वेन रूपेण पञ्चकृत्यकारित्वेन स्वरूपेण अभिव्यक्तिर्भवतीत्यर्थः। तदुक्तं तत्त्वप्रकाशिकायां "यो जयति परे तत्त्वे दीक्षयाचार्यमूर्तिस्थः" इति उक्तं च प्रत्यभिज्ञा सूत्रे "तत्परिज्ञाने चित्तमेव अन्तर्मुखीभावेन चेतनपदाध्यारोहाच्चितिः" इति। गुरुमुखाच्च स्वस्वरूपपरिज्ञाने अख्यातिलक्षण कारणापसरणात् स्वशक्तिव्यामोहितृत्वरूप संसारित्वनिवृत्तौ स्वातन्त्र्यलोभात् चित्तमेव बहिर्मुखतारूपसंकोचं जहत् अन्तर्मुखत्वेन चेतनपदाध्यारोहात् क्रमेण संकोचकलाया अपि विगलनेन स्वरूपापत्त्या चितिर्भवति। अर्थात् चिच्छक्ति-रूपां परां भूमिमाविशति। तथा चोक्तम्-" स पुनश्शाम्भवेच्छातश्शिवा-भेदं परामृशन्। क्रमान्मन्त्रेशतन्नेतृरूपो याति शिवात्मताम्॥ इति। आचार्यमूर्तिस्थश्श्रीगुरुः शिष्यगत शक्तिपातं दृष्ट्वा कृत्वा वा दीक्षापुरस्सरं शिष्यस्य शिवाभेदं ज्ञापयति तदा शिवाभेदं परामृशन् क्रमात् शिवता-माप्नोति। उक्तं च दीक्षालक्षणगुरुकारुण्यस्थले "इति शुद्धेन शिष्येण प्रार्थितः परमो गुरुः। शक्तिपातं समलोक्य दीक्षया योजये-दमुम्॥ दीयते च शिवज्ञानं क्षीयते पाशबन्धनम्। यस्मादतः समाख्याता दीक्षेतीयं विचक्षणैः'॥ "दीक्षया नाहं शिवः नाहं पूर्णः" इत्याद्यकारक मलमायापाशबन्धनविलये शिवस्वरूपज्ञानलाभे

शिव एव भवति । एष च दीक्षाविचारो क्रियासारादौ विस्तरतः प्रदर्शितः । नीलकण्ठशिवाचार्यादिभिः तत एवावगन्तव्यः । तथा च दीक्षया आविर्भूतस्वरूपो यदा भवति तदा तस्य जीवत्वाभावात् । ब्रह्मधर्मोपदेशस्य युक्तत्वात् तस्य ब्रह्मत्वात् । "तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्"; "ब्रह्म वेद ब्रह्मैव भवति" इत्यादि श्रुतिषु मुक्तस्य शिवत्वं सूचितम् । "अन्तर्बहिश्च तत्सर्वं परिपूर्णं महेश्वरम् । भावयेत्परमानन्दलब्ध्यर्थे पण्डितोत्तमः ॥ शिवोऽहमिति भावो हि शिवतापत्तिकारणम् । न ज्ञानमात्रं नाचारो भावयुक्तश्शिवो भवेत्" ॥

ज्ञानं वस्तु परिच्छेदो ध्यानं तद्भावकारणम् ।
तस्मात् ज्ञानी महादेवे ध्यानयुक्तो भवेत्सुधीः ॥
नैरन्तर्येण सम्पन्नो भवेद्ध्यातुं शिवं प्रति ।
तद्भावो जायते यद्वत् कृमेः कीटस्य चिन्तनात् ॥
गुरोः कटाक्षवेधेन शिवो भवति मानवः ।
रसवेधाद्यथा लोहो हेमतां प्रतिपद्यते ॥

इत्यादि स्मृतिरपि मुक्तस्य शिवत्वं ब्रूते । इदमत्र ज्ञातव्यम्—ज्ञानक्रियाशक्तिरूपशिवदीक्षया तत्संकोचप्रयुक्त मलविगलनेसति जीवस्य आविर्भूतस्वरूपत्वात् शिवः न तु शुद्धस्फटिकस्य स्वाच्छ्य शौक्ल्यरूपं प्राग्विवेकग्रहणात् रक्तनीलाद्युपाधिभिरव्यक्तमिव भवति । विवेकग्रहणात् स्फटिकः शौक्ल्येन स्वेन रूपेण अभिनिष्पद्यते । तथैव देहाद्युपाध्यविविक्तस्य जीवस्य श्रुतिकृतविवेकज्ञानं शरीरात्समुत्थानम् ।

तत्फल स्वरूपेणाभिनिष्पत्तिः, नामकेवलात्मस्वरूपावगति विवेकविज्ञाना-भावात् अविनाभूतस्वरूपस्सन् विवेकविज्ञानादाविर्भूतस्वरूपः इत्युच्यते । "तं ध्यात्वा मृत्युमतीत्य नान्यः पन्थाविमुक्तये" इति । तं ध्यात्वा मुनिर्गच्छति भूतयोनिं" इति च कैवल्य श्रुतेः । 'यदि वाचनिका-ज्ञानान्मुक्तिः स्याद्भावनां विना । शरीरमानसैर्दुःखैर्मुच्येरन् सर्वजन्तवः" इति । अन्या च युक्तिः "रसायनं विना स्वदात्सूचितं ह्यपि सिद्धिदम्" इति । अन्यच्चोक्तं 'आगोपबालवनितं भगवंस्त्वमित्थं । ज्ञातःप्युपाय विरहान्न तु मोक्षदोऽसि । नान्तस्थितं भवति धेनुषु तृड्विहर्तुः क्षीरं तदेव पुनरभ्यवहारतस्स्यात् इति । स्वस्वरूपावरकाज्ञानस्य अन्यथाऽ-निर्वचनीयतारूप्यातित्वाभावात् । अस्मन्मते शिवजीवयोर्भेदस्य मित्थ्या-ज्ञानकृतत्वाभावात् शिवशक्तिस्वातन्त्र्यपरिकल्पितसंकोचकृतत्वात् तयोरभेदस्य विकसितस्वशक्तिदशायां उपपन्नत्वात् कूर्माङ्गभङ्गि-अहिकुण्डलस्वर्णकुण्डलन्यायादिभिः स्वरूपस्यैव स्वेच्छया संकोचस्वरूप-स्यैवाविर्भाव इति । "आविर्भूतस्वरूपस्तु" इत्युक्तवः ज्ञायमानत्मात् तथा चाविर्भूतस्वरूपः अपहतपाप्मत्वादिधर्मानर्हति । तस्य शिवात्म-कत्वात् उक्तं च षाड्गुण्यविवेके

"एवं त्वन्मय एवाहमिति भावनया त्वयि ।
प्रलीनाहंकृतिग्रन्थिः पश्यत्येव त्वदात्मताम्" इति ॥

उक्तं च स्पन्दकारिकायां "निजाशुद्धासमर्थस्य कर्तव्येष्वभिलाषिणः । यदा क्षोभः प्रलीयेत तदास्यात्परमं पदम्" स्वाभाविकाशुद्ध अविद्यया

असमर्थस्य संकुचितशक्तेरित्यर्थः। "तदा स्यात्परमं पदम्" इत्यस्य स्वस्वरूपे स्थितिर्भवेदित्यर्थः। सर्वज्ञत्वादि पञ्चकृत्यकारित्व स्वरूपाविर्भावोऽपि "अपित्वात्मबलस्पर्शात् पुरुषस्तत्समो भवेत्।" इति स्पन्दकारिकोत्तरार्धेन उक्तः।

ननु तत्साम्यघटक तद्भेदस्य स्वरूपविकासदशायामपि सत्वे कथं मुक्तत्वं नैयायिकांगीकृत निर्दुःखत्वादिना सादृश्यस्यैव मुक्तित्वे कथं वा आविर्भूतस्वरूपस्य शिवात्मकत्वं इति चेन्न। तत्सादृश्यं तदभिन्नत्वं वक्तव्यं "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुत्या तत्समत्वासम्भवस्य दर्शितत्वात्" "गगनं गगनाकारं सागरस्सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव" इत्यादाविव तत्समत्वं तदभिन्नत्वमेवेति बोध्यम्। "शिवस्वरूपो भवति शिवस्वरूपो भवति" इति श्रुतेः। श्रीमरितोण्टदार्येणापि "प्रसन्ने सति मुक्तोऽभून्मुक्तश्शिवसमो भवेत्" इत्यत्र शिवसाम्यस्य शिवाभिन्नत्वात्मकत्वस्य उक्तत्वात्। न च 'मुक्तश्शिवसमो भवेत्'। 'पुरुषस्तत्समो भवेत्" इत्युक्तश्लोकाभ्यां सिद्धान्तशिखामणिस्पन्दप्रदीपिकाकाराभ्यां श्रीकण्ठाचार्याङ्गीकृत तत्समानगुणसार कैवल्य लक्ष्मीरूपमोक्षस्येव शिवसमानगुणसारकैवल्यमभिप्रेतमिति वाच्यम्। "स्वप्रकाशविराजन्तमनामयमनौपमम्।" इत्यत्र अनौपमपदेन निर्दिष्टशिवसादृश्यरहितत्वोक्तेः विरोधः स्यात्। मुक्तशिवसादृश्यस्य सत्वात्। अतश्शिवसमानगुणसार कैवल्यं श्रीसिद्धान्तशिखामणिकाराणामनभिप्रेतमिति ज्ञायते। एवं श्रीस्पन्दप्रदीपिकाकार श्रीकल्लटाचार्येणापि नाङ्गीकृतम्। अन्यथा अनतसततमुद्युक्तस्स्पन्दतत्त्वविविक्तये जाग्रदेवनिजां

भावमचिरेणाधिगच्छति ' इति स्वोक्तेर्विरोधः स्यात् । " स्पन्द-तत्त्वविविक्त्यै " इत्यस्य स्वरूपाभिव्यक्त्यर्थं निजं आत्मीयं भावं स्वभावं अचिरेण शीघ्रमधिगच्छति इति व्याख्यातवता उत्पलाचार्येणाप्यनङ्गीकृतत्वात् न तत्समानगुणसारं कैवल्यं उक्त श्रुतिविरोधात् अनेकेश्वरप्रसंगात् मुक्तस्य ईश्वरत्वाभावे ईश्वरनियम्यत्वाद्बद्धाविशेष-प्रसङ्गात् । ईश्वरत्वे अनेकेश्वराणामिन्नाभिप्रायकतया कार्योच्छेद-प्रसङ्गाच्च ।

ननु मुक्तदशायां शिवजीवयोर्भेदस्य ' मम साधर्म्यमागतम् " इत्यत्र साधर्म्यपदेन ज्ञायमानत्वात् आगता इति । " मुक्तानां परमागतिः " " सायुज्यं प्रतिपन्नाय ". " यस्मिन् पदे विराजन्ते " "मुक्ताः संसारबन्धनैः " इति च बहुवचनबलात् मुक्तात्मनां भेदस्य श्रत्याद्युक्तस्य सत्वात् कथं शिवाभिन्नत्वं मुक्तस्य " इति चेदुच्यते । शिवव्यावर्तक स्वशक्तिसंकोचप्रयुक्तहेतूनां देवतिर्यङ्मनुष्यादि भेदानां कामक्रोधादि भेदानां च निवृत्तौ मुक्तजीवानां अभिन्नत्वात् तस्य शिवाभिन्नत्वात् न मोक्षदशायां भेदो वक्तुं शक्यते । तत्र बहुवचनस्य भूतपूर्वगत्या जीवगतानेकत्वार्थकत्वादविरोधात् । अन्यथा " ब्रह्म वेद ब्रह्मैव भवति " "यस्सर्वज्ञस्सर्ववित्" "अहमन्न महमन्नमहमन्नादोऽहमन्नादोऽहमन्नादः" " अहं ब्रह्मास्मि " इत्यादि श्रुतेर्विरोधः स्यात् ।

ननु यथा परिपूर्णगुरुत्वादिभिः समानानां स्वर्णकलशरत्नव्रीहि प्रभृतीनां पदार्थानां भेदकस्य लक्षणस्याभावेऽपि व्यक्तीनां नानात्वं

दृश्यते । तथा कथंचिदपि भेदप्रतिपत्तिहेतूनां अभावेऽपि एकाकाराणां मुक्तात्मनां भेदस्सिध्यति । उक्तभेदप्रतिपादक श्रुतीनां च मुक्तात्मनां स्वरूपस्य शिवस्वरूपात्यन्तसमत्वात् अविरोधः इति चेदुच्यते । छत्रचामरवाहनादि सहितराज्ञः पादचारित्वादिवत् । विश्वोत्तीर्ण विश्वात्मक सर्वकर्तृत्व सर्वज्ञत्व परिपूर्णत्व नित्यत्व व्यापकत्व-शक्तिः परशिव एव संकुचित कला-विद्या-राग-काल-नियतिरूपशक्ति-र्भवति । तथाविधश्चायं शक्तिदरिद्रसंसारीत्युच्यते । स्वशक्ति-विकासेतु शिव एव ।

ननु राज्ञः पादचारित्वदशायां अहं राजा इति वत् शिवस्य संसारित्वदशायां शिवोऽहमित्येव कुतो न प्रत्यभिज्ञायते इति चेन्न । राज्ञोऽपि कदाचिन्नाहं राजा इति वत् "नाहं शिवः नाहं पूर्णः" इत्यादि प्रतीतेरुपपद्यमानत्वात् । तथा च शिव एव योगीव स्वशक्ति वैचित्र्येण नानाजीवरूपतया भासते । परिपक्वहृदयं शिष्यं यदाचार्य मूर्तिस्थस्सन् अनुग्रहशक्त्या परतत्वे योजयति तदा जीवश्शिव एव । अन्यथा "यथा नद्यः स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यादि श्रुतिविरोधापत्तेः । यथा नीरक्षीर, सिन्धुसैन्धवयोजनानन्तरं व्यक्तिगत द्वित्वमपि न दृश्यते तथा मुक्तात्मशिवयोरिति वक्तव्यम् । अहिकुण्डलं, स्वर्णकुण्डलमित्यत्र अहेस्स्वर्णस्य कुण्डलमिति विभागः कुण्डलाकारं परित्यज्य यदा स्वरूपमापद्यते तदा तत्रैव विभागस्य लीनत्वात् न विभक्तप्रत्ययो भवति । तथा मुक्तदशायां

विभागस्य शिव एव लीनत्वात् जीवशिवयोरेकत्वमेवेति निश्चीयते। एतादृश लीनविभागाभिप्रायेणैव मुक्तदशायां भेदो वर्तत इत्युक्तम्। यथा च विभागातिरिक्त भेदो न सिध्यति तथा वक्ष्यते। तथा च आविर्भूत स्वरूपस्य शिवत्वात् शिवस्यैव दहराकाशवाच्यत्वम्। तस्यैवापहतपाप्मत्वादिकं उपास्यत्वं च सिध्यति; न तु संकुचितशक्तेर्जीवस्येति भावः।

ननु दहराकाशस्य शिवत्वे "अथ एष संप्रसादः" इत्याद्युक्त जीवपरामर्शस्य वैयर्थ्यं स्यात् इत्याशंकायामाह—

सू. अन्यार्थश्च परामर्शः ॥ २० ॥

परामर्शः-जीवपरामर्शः-अन्यार्थः-ब्रह्मस्वरूपप्रतिपादनार्थः—न तु जीवस्वरूपविवक्षया तदुपास्यत्वविवक्षया वा "अस्मात् शरीरात् समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यत्र यत्परंज्योति रुपसम्पद्य जीवे अपहतपाप्मत्वादि स्वरूपं निष्पद्यते तत् स्वरूपत्वात् जीवस्य तद्ब्रह्मैवोपास्यमित्यर्थः।

दहरायतनत्वस्य ब्रह्मणोऽनुपपन्नत्वात् दहराकाशवाच्यत्वं उपास्यत्वं च कथमित्यत्राह—

सू. अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

ननु व्यापकस्य परशिवस्य अल्पपरिमाणासम्भवात् "दहरोऽस्मिन्नन्तराकाश" इत्याकाशस्य अल्पत्वश्रुतेः दहराकाशवाच्यत्वं

जीवस्यैवेति चेन्न। तदुक्तं–"अर्भकौकस्त्वात्" इत्यत्र सर्वव्यापकस्यापि शिवस्य भक्तोपासनार्थं व्योमदृष्टान्तेन प्रादेशिकत्वमुक्तमित्यर्थः।

सर्वगतस्य शिवलिङ्गस्य अन्तर्यामित्वमुक्त्वा तस्य स्वप्रकाशत्वमाह—

सू. अनुकृतेस्तस्य च ॥ २२ ॥

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यत्र सर्वप्रपञ्चप्रकाशकत्वेन अवगम्यमानं वस्तु परशिव एव। न तेजो विशेषः, तस्य सूर्यचन्द्रादि प्रपञ्चस्य अनुकृतेः, अनुकरणात् "तमेव भान्तमनुभाति सर्वं" इत्यनुमानादित्यर्थः। तस्य भासा सर्वमिदं विभाति" इत्यत्र चन्द्रसूर्यादेः स्वेनैवप्रकाशासम्भवस्य दर्शितत्वाच्च। तस्येति तत्पदेन परशिवस्योच्यमानत्वात्। अत्र "तमेव भान्तमनुभाति सर्वं" इत्यनेन चित्प्रकाशान्तर्गतत्वेनैव सर्वेषां प्रकाशः न तदनन्तर्गतत्वेन केषांचित्प्रकाश, इति परशिवस्य विश्वात्मकत्वम्। "तस्य भासा सर्वमिदं विभाति" इत्यनेन विश्वोत्तीर्णत्वमप्युक्तमिति बोध्यम्।

हेत्वन्तरमाह—

सू. अपि च स्मर्यते ॥ २३ ॥

कृष्णगीतासु स्मर्यते इत्यर्थः। तथाहि "न तद्भासयते सूर्यो न शशांको न पावकः"। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम।"

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् " इति । श्लोकद्वयेन स्वस्याभास्यत्व सर्वभासकत्व-योर्निर्दिष्टत्वात् स्वयं प्रकाशस्वरूप विश्वोत्तीर्णत्व सर्वावभासकत्वरूप-विश्वात्मकत्वयोरसिद्धत्वात् भास्यभासकयोरभेदात् घट इति ज्ञानं मठ इति ज्ञानमित्यभेद प्रतीतेः । उक्तं च स्पन्दकारिकायाम्—' यस्मात् सर्वमयो जीवस्सर्वभावसमुद्भवः । तत्संवेदनरूपेण तादात्म्यप्रतिपत्तितः । तेन शब्दार्थचिन्तासु न सावस्था न याशिवः भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ॥ " इति । जीवस्य बोद्धृरूपत्वात् तस्य बोधरूपत्वात् तस्य बोध्यरूपत्वात् जीवात्मा सर्वमयः विश्वरूप इत्यर्थः । उक्तं च " यदैव विदितविश्वं तदानीमेव चिन्मयम् । नास्ति भेदो वेद्योऽसौ नाथयो वेदकाद्धि हि ॥ वेद्यो वेदकतामाप्तो वेदकस्संविदात्मताम् । संवित्स्वदात्माचेत् सत्य तदिदं त्वन्मयं जगत् ॥ आत्मैवेदं जगत्सर्वं नेहनानास्ति किञ्चन " इति श्रुतेश्च । अन्यच्चोक्तम्—' त्वदात्मकत्वं भावानां विवदन्ते न केचन । यत्प्रकाशयदर्शा याता नाप्रकाशः प्रकाशते ' तथा " न प्रकाशाः प्रकाशन्ते त्वत्प्रकाशोदयं विना " इति । उक्तं च स्वात्मसप्ततौ—' यद्यद्वस्तु स्वभावेन ज्ञानेन विषयीकृतम् । तद्वत्तादात्म्यमायाति जीवस्सर्वमयोह्यतः " इति । अन्यच्च शिवत्प्रकरणे " यथा मना समाविष्टं सर्वं तद्रूपमिष्यते । तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम् ॥

तथा च चिति संकोच चित्तविशिष्ट जीववेद्यस्य जीवरूपत्ववत् शिवप्रकाशेन प्रकाश्यमानानां सर्वेषां शिवात्मकत्वमिति भावः ।

एतादृश विश्वात्मकविश्वोत्तीर्ण परशिवस्य श्रुत्युक्तांगुष्ठमात्रत्वादिक-
मप्युपपद्यते इत्याह—

सू. शब्दादेव प्रमितः ॥ २४ ॥

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते" इति । "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्यस्स उश्व एतद्वैतत्" इत्यत्र अङ्गुष्ठमात्रः पुरुषः परशिव एव ।

ननु संकुचित शक्तिकजीवस्य "नाहं पूर्णः" इति आणव-मलोपपन्नत्वात् । "चित्तमात्मेति" शिवसूत्रेणापि तस्य अणुत्वस्य ज्ञायमानत्वात् । "स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः । अंगुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः" इति श्रुत्यन्तरेणापि तस्यैव अंगुष्ठमात्रत्वसिद्धेः । "मध्य आत्मनि तिष्ठति" इत्यनेन देहान्तर्वर्तित्वावगमाच्च । अंगुष्ठमात्रः पुरुषो जीव एवेति चेन्न, शब्दादेव; ईशानशब्दादेव, साक्षात् शिवः प्रमितः निश्चित इत्यर्थः । "ईशानः सर्वविद्यानामीश्वरस्सर्वभूतानां" इत्यादि श्रुत्यन्तरे तस्यैव ईशानशब्दवाच्यत्वात् । "ईशानो भूतभव्यस्य" इत्यादि श्रुत्युक्त भूतभव्येश्वरत्वस्य "ज्ञाज्ञौ द्वावजावीशानीशौ" इत्यनीशस्य जीवस्य अनुपपन्नत्वात् "सर्वो वै रुद्रः" इत्यादौ तस्यैव चराचरात्मकत्व श्रवणात् । "नमस्ते भगवन्विश्वेश्वराय" इत्युपक्रम्य सर्वेश्वराय सदाशिवाय श्रीमन्महादेवाय" इत्यन्तेन तस्यैव विश्वोत्तीर्णत्व श्रवणाच्च ।

अंगुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥ इत्यादि परशिवस्यैव अंगुष्ठमात्रत्वनिर्देशात् न जीव इत्यर्थः ।

ननु विश्वातीत विश्वात्मक शिवस्य परब्रह्मणः अंगुष्ठमात्रत्वमनुपपन्नमित्याशङ्कायामाह—

सू॰ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

अत्र तु शब्दः पूर्वपक्षनिरासार्थः । हृद्यपेक्षया विश्वोत्तीर्ण विश्वात्मकापरिच्छिन्नस्यापि परशिवस्य हृदयापेक्षया परिच्छिन्नत्वं सम्भवति, ज्योतिर्लिङ्गोपासनाशास्त्रस्य मनुष्याधिकारत्वात् । मनुष्यमात्राधिकारत्वात् । एतेन मनुष्यमात्रस्यैव ब्रह्मविद्याधिकारत्वं सूचितम् । भक्तानुग्राहकः परशिवः मनुष्यहृदयपरिमितस्वरूपं परिगृह्य तदुपासनासिद्धये ज्योतिर्मयप्राणलिङ्गरूपतया उपासकहृत्पद्मे तिष्ठतीत्यर्थः ।

नन्वेवं अन्तर्लिङ्गधारणस्य मनुष्यत्वावच्छिन्नमात्रनिष्ठत्वे अथर्वशिरसि—“ते देवा रुद्रं ध्यायन्ति” इति श्रूयमाण रुद्रकर्मकध्यानं ज्योतिर्लिङ्गानुसन्धानम्, अन्तर्लिङ्गधारणमिति यावत् । उक्तंचाचार्येण —“ज्योतिर्लिङ्गानुसन्धानमान्तरं लिङ्गधारणमिति लिङ्गधारणचन्द्रिकाकारेणापि —“मुखे मन्त्रो हृदि ध्यानं मस्तके लिङ्गधारणम्” इत्यत्र हृदि ध्यानमित्यस्य अन्तर्लिङ्गधारणार्थकत्वमुक्तम् । अनुपपन्नमित्याशङ्का शान्तये देवताधिकरणमारभते—

सू. तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

तदुपर्यपि मनुष्याणामुपर्यपि देवादीनामाभ्यन्तरब्रह्मलिङ्गधारणं सम्भवतीति बादरायणाचार्यो मन्यते । कुतः ? सम्भवात् । तेषामपि अपवर्गकेच्छायाः सम्भवात् । उक्तं च श्रीमन्नीलकण्ठशिवाचार्यं चरणैः—

यथा मनुष्यैर्धर्तव्यं लिङ्गं देवैस्तथैव हि ।
अधिकारं देवतानां मनुते बादरायणः
तदुपर्यपि देवानां विष्णवादीनां च सम्भवात्
तेषां विग्रहवत्वाच्च ह्यधिकारोऽत्र निश्चितः ॥ इति ।

विग्रहवत्वं च तेषां "इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्यादिना तैत्तिरीयादौ श्रूयते । उक्तं च रेणुकागस्त्यसंवादेऽपि—

"ब्रह्मविष्णवादयो देवा मुनयो गौतमादयः । धारयन्ति सदा लीङ्गमुत्तमाङ्गे विशेषतः ॥ लक्ष्म्यादि शक्तयस्सर्वा शिवभक्तिविभाविताः । धारयन्त्यलिकाग्रेषु शिवलिङ्गमहर्निशम् ॥" तत्रैव "ब्रह्मा विष्णुश्च रुद्रश्च वासवाद्याश्च लोकपाः । मुनयस्सिद्धगन्धर्वा दानवा मानवास्तथा । सर्वे च ज्ञानयोगेन सर्वकारणकारणम् ॥ पश्यन्ति हृदये लिङ्गं परमानन्दलक्षणम्" इत्यादिना बह्याभ्यन्तरधारणमप्युक्तम् । लक्ष्म्यादित्यनया रेणुकभगवत्पादाचार्योक्त्या स्त्रीणां लिङ्गधारणं विधीयते ।

ननु देवानां विग्रहादिमत्त्वे कर्मणि विरोधः स्यात् इत्याशङ्क्य निराकरोति—

सू. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

एकस्य देवशरीरस्य अनेकत्र युगपत्सन्निधानासम्भवात् कर्मणि-विरोधः स्यादिति चेन्न ।

"अनेकप्रतिपत्तेः" योगिनामिव देवतानामपि अनेकशरीरधारणस्य दर्शनात् । "कति देवाः", इत्युपक्रम्य त्रयश्च त्रीच शता ; त्रयश्च त्रीच सहस्रा इत्युक्त्वा "कतमेते" ? इति पृच्छायां "महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः" इत्यादिषु कथनादित्यर्थः । तस्मात् एकस्मिन् दिने एव क्रियमाणेषु अनेकेषु यागेषु एकस्यैव देवस्य अनेक-शरीरपरिग्रहसम्भवात् । तत्र सान्निध्यात् न विरोध इति भावः ।

वैदिकशब्दे विरोधमाशङ्क्य परिहरति—

सू. शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥२८॥

शब्दे वैदिकेन्द्रादिशब्दे विरोध इति चेत् न । विरोधा-नित्यत्वविरोध इति चेन्न । अन्तः प्रभावात् । अतः वैदिकात् देवेन्द्रादिशब्दात् इन्द्रादीनामुत्पत्तेः इन्द्रादिशब्दानां आकृतिवाचकत्वात् व्यक्तिपरत्वाभावात् इन्द्रादिव्यक्तिनाऽशेपि तेषामनित्यत्वादिकं न स्यात् । तथा च इन्द्रादिव्यक्तिविनाशेऽपि तत्तदाकृतेरविनाशेन इन्द्रादि वैदिक-शब्दानां नित्यत्वादविरोधः । तत्र वेदस्य इन्द्राद्यर्थजनकत्वं च

प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां सिद्धं भवति । तथा हि "वेदेन रूपे व्यकरोत् सता सति प्रजापतिः, स भूरिति व्याहरत् । स भूमिमसृजत्" इत्यादि श्रुतिः "सर्वेषां च स नामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाप्य निर्ममे" ॥ अत एव च नित्यत्वम् । अत एव वेदस्य देवादि प्रपञ्चं प्रति कारणत्वादेव नित्यत्वम् । अविरुद्ध मित्यर्थः । वेदानां परमेश्वरविमर्शशक्तिस्वरूपत्वात् नित्यत्वात् । तन्मिथ्यात्वे वेदबाह्य पाषण्डमतप्रवेशप्रसक्तेश्च । "वाचो नित्या" इत्यादि श्रुति विरोधाच्च नानित्यत्वमित्यर्थः । इन्द्रादि देवानां प्रतिकल्पं विलक्षणनामरूपवत्वात् वेदस्य कथं तत्प्रतिपादकत्वं इत्याशङ्कयाह—

सू. समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ३० ॥

समाननामरूपत्वात् सर्वेषां इन्द्राणां सर्वेषु कल्पेषु समाननामरूपत्वात् आवृत्तावपि इन्द्रपरंपरायाः अङ्गीकृतत्वेऽपि अविरोधः वेदस्य इन्द्रप्रतिपादकत्व विरोधो नास्ति । कुतः ? दर्शनात् । श्रुतेः स्मृतेश्च इत्यर्थः । तदुक्तं—"सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथोसुवः ।" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोऽति तस्मै तँ्ह देव मात्मबुद्धिप्रकाशं, मुमुक्षुर्वै. शरणमहं प्रपद्ये" इत्यादि श्रुतिः स्मृतिरपि "आप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशु समप्रभं । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः । ब्रह्माणं विदधे पूर्वं वेदानस्मै प्रयच्छति ॥" उक्तं च सिद्धान्तशिखामणौ—" जगत् सिसृक्षुः प्रथमं

ब्रह्माणं सर्वदेहिनाम् । कर्तारं सर्वलोकानां विदधे विश्वनायकः ॥ तस्मै प्रथमपुत्राय शङ्करः शक्तिमान् विभुः । सर्वज्ञः सकला विद्यास्सानुग्रहमुपादिशत् ॥ इति ।

मतान्तरमाह—

सू. मध्वादिष्वसम्भवात् अनधिकारं जैमिनिः ॥ ३१ ॥

"असौ वा आदित्यो देवमधु" इत्यादि श्रुतौ आदित्यमण्डल प्राप्तिफलकेषु मधुविद्यादिषु आदित्यादीनां अधिकारासंभवात् स्वस्यैवोपास्यत्वोपासकत्वाभावात् विद्यात्वाविशेषात् ब्रह्मविद्यायामपि अनधिकारं जैमिनिराचार्योमन्यते ।

तत्र हेत्वन्तरमाह—

सू. ज्योतिषि भावाच्च ॥ ३२ ॥

नक्षत्रमण्डलेष्विव लोके आदित्येन्द्रादिशब्दानां ज्योतिर्मण्डले अचेतने प्रयुज्यमानत्वात् विग्रहवद्देवतायामप्रयोगात् नाधिकार इति भावः ।

तन्मतं निराकरोति—

सू. भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तु शब्दः पूर्वपक्षनिराकरणार्थः । बादरायणः आचार्यः । मधुविद्यादिषु देवानामधिकाराभावेऽपि ब्रह्मविद्यायामधिकारं मन्यते । यद्यपि ज्योतिर्मण्डलादेरचेतनत्वान्नाधिकारः । तथाप्यस्ति हि तद्व्यतिरिक्ता

मण्डलाभिमानिनी विग्रहवती चेतना देवता पुराणेषु प्रतिपाद्यते इत्यर्थः। "अहहारेत्वा शूद्र तवै सः गोस्त्विरिति" श्रुतौ शूद्रशब्दप्रयोगात् संस्काराभावप्रयुक्तशूद्रत्वाश्रयाणामपि ब्रह्मविद्यायामधिकारोऽस्तीति शङ्कां परिहरति ---

सू. शुगस्य तदनादरश्रवणात्तदा द्रवणात् सूच्यते हि ॥ ३४ ॥

अस्य जानश्रुतेः तदनादरश्रवणात् हंसोक्तानादरवाक्यश्रवणात् शुगुत्पन्ना, तदा द्रवणात् तया आचार्यं प्रत्याद्रवणात् आगमनात् सूच्यते शूद्रशब्देन प्रतिपाद्यते इत्यर्थः। हि शब्दो हेत्वर्थकः। यतः शूद्रशब्दो न रूढः। किन्तु यौगिकः। ततः अदीक्षितस्य शूद्रस्य अन्त-लिङ्गानुसन्धानरूप ब्रह्मोपासनं मोक्षप्रयोजकमित्यर्थः। अत्रैवाधिकरणे स्फुटीभविष्यत्येतत्—

ननु योगाद्रूढेर्बलीयस्त्वात् रूढोऽर्थः कस्मान्नाद्रियते तत्राह—

सू. क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

उत्तरवाक्ये "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणा ब्रह्मचारीभिभिक्ष" इत्यत्र अभिप्रतारी चैत्ररथः क्षत्रिय इत्यवगम्यते। (चैत्ररथाख्येन क्षत्रियेण सह पाठा-लिङ्गात्) कापेयाख्य याजकयोगस्य "एतेन चैत्ररथं कापेया अयाजयन्" इत्यादिना श्रूयमाणत्वात् चैत्ररथक्षत्रियेण सह पाठाल्लिङ्गात्

क्षत्रियत्वगतेः क्षत्रियत्वनिश्चयादित्यर्थः । अतोऽत्र क्षत्रिय एव शूद्र-शब्दो वर्तते । तस्मान्नादीक्षितस्य शूद्रस्य ब्रह्मविद्यायामधिकारः ।

ननु शूद्रस्य तत्त्वमस्यादि महावाक्यविचारजन्यब्रह्मविद्याया-मनधिकारे तस्य मोक्षः कथं स्यादित्यत्राह—

सू. संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३६ ॥

"पवित्रन्ते विततं ब्रह्मणस्पते", "सर्वलिङ्गं स्थापयति", "लिङ्गव्रतं चरेत्", "भृगुर्वै वारुणिः वरुणं पितरमुपससाद । अधीहि भगवो ब्रह्मेति" "तं ह्योपनिन्ये" "चतुर्वर्णानां धारणं कुर्यात्" "सर्व वर्णेषु धारणम्" "अयं मे हस्तो भगवान्" "याते रुद्र शिवातनूरघोराऽपापकाशिनी" "त्र्यम्बकं यजामहे", "शिरसि महादेवस्तिष्ठत्विति धारयेत्" इत्यादिषु शिवदीक्षासंस्कारस्य परामर्शात् । संस्कारो नाम शिवदीक्षेति वायवीये कृष्णोपमन्युसंवादपरिशीलनेन ज्ञायते । तथा हि—

"इदानीं श्रोतुमिच्छामि शिवसंस्कारमुत्तमम्" इति प्रश्ने—उपमन्युः—"हन्त ते कथयिष्यामि सर्वपापविशोधनम् । संस्कारं परमं पुण्यं शिवेन परिभाषितम् ॥ सम्यक् कृताधिकारस्यात्पूजादिषु नरो यतः । संस्कारः कथ्यते तेन षडध्वपरिशोधनम् ॥ दीयते येन वै ज्ञानं क्षीयते पाशबन्धनम् । तस्मात्संस्कार एवायं दीक्षेत्यपि च कथ्यते ॥"

इत्यादिभिः क्रियासारकारादृत श्लोकैः शिवदीक्षाया संस्कारत्व-दर्शनात्। एतादृशसंस्कारस्य को वाधिकारीत्यपेक्षायां "शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति। शिवधर्माधिकारस्य तन्मूलत्वात्समासतः" इत्यादि बहुवाक्यैः यत्र "शक्तिपातः" तस्याधिकारित्वमुक्तम्। अनधिकरित्वं च—

"यत्र शक्तिर्न पतिता तत्र शुद्धिर्न जायते।
न विद्या न शिवाचारो न मुक्तिर्न च सिद्धयः॥
तस्माल्लिङ्गानि संवीक्ष्य शक्तिपातस्य भूरिशः।
ज्ञानेन क्रियया वाथ गुरुः शिष्यं विशोधयेत्" ॥"

इत्यादिनोक्तम्। एतद्वैपरीत्येऽपि—"योन्यथा कुरुते मोहात् स विनश्यति दुर्मतिः। तस्मात्सर्वप्रयत्नेन गुरुः शिष्यान् परीक्षयेत्" इत्यादिना निन्दाचोक्ता। शक्तिपातचिह्नानि तु—"लक्षणं शक्तिपातस्य प्रबोधानन्दसम्भवः। सा यस्मात्परमा शक्तिः प्रबोधानन्दरूपिणी। आनन्दबोधयोर्लिङ्गमन्तःकरणविक्रिया। यथा स्यात् कम्प रोमांच स्वरनेत्राङ्गविक्रिया" इत्यादिभिरुक्तानि बोद्धव्यानि।

उक्तं च सिद्धान्तशिखमणौ—"शक्तिपातं समालोक्य दीक्षया योजयेद्गुरुः॥" इति।

किञ्च—"किमत्र बहुनोक्तेन भक्तास्सर्वेऽधिकारिणः। मम पञ्चाक्षरे मन्त्रे तस्मात् श्रेष्ठस्ततो हि सः" इत्यनेन मनुदीक्षाधिकारित्वा-

मपि भक्तमात्रे कथनात् । किञ्च—"भगवन् मोक्षमार्गोऽयं त्वया सम्यगुदाहृतः । तत्राधिकारिणं ब्रूहि तत्र मे संशयो महान्" । इति रामप्रश्ने "ब्रह्म क्षत्रियविट्शूद्रा स्त्रियश्चात्राधिकारिणः" । इति परमशिवेनैव सर्वेषां मोक्षमार्गाधिकारित्वस्योक्तत्वात् ।

किंच—तेनैव—"बहुनात्र किमुक्तेन यस्य भक्तिः शिवार्चने । स एवात्राधिकारी स्यान्नान्यचित्तः कथंचन" । इत्युक्तत्वाच्च मोक्ष-मार्गभूतब्रह्मविद्यायां मनुष्यमात्राधिकारित्वं ज्ञायते ।

किंच—वीरशैवधर्मशिरोमणिकारैरपि "यश्च मत्करुणापात्रं चरमं जन्म यस्य वै । तस्यैव जायते भक्तिर्मम लिङ्गस्य धारणे" ॥ इत्या-गमश्लोकमुक्त्वा लिङ्गधारणे शिष्यस्य भक्त्युद्रेकमालोक्य "हस्तमस्तक-संयोगमाचरेच्च शिवं स्मरन् । अर(?)वस्तु तिष्ठ शिवाज्ञेतीच्छङ्गीकुर्या-द्गुरुस्ततः ॥

इत्यादिना शिवसंस्कारस्य भक्तमात्राधिकारित्वमुक्तम् ।

किञ्च—"भक्तिमात्र पवित्रा हि सर्व एवाधिकारिणः" । इत्य-न्यत्र उक्तत्वाच्च । "परिपक्वमलान् शम्भुः सकलानां च मध्यतः । कृपया परया वीक्ष्य दीक्षयेद्देशिकोत्तमः ॥ गुरुश्च स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ ब्राह्मणं, क्षत्रियं वैश्यं द्विवर्षं त्रिवर्षं तथा ॥ प्राणद्रव्यप्रदानाद्यैरादेशैश्च समागमैः । आकृष्टास्ताडिता वापि ये विषादं न यान्त्यपि । ते योग्या संयताः शुद्धाश्शिवसंस्कारकर्मणि ॥

अहिंसका दयावन्तः नित्यमुद्युक्तचेतसः । अमानिनो बुद्धिमन्त इत्यक्तस्पर्धाप्रियंवदाः ॥ ऋजवो मृदवो स्वस्था विनीता स्थिरचेतसः । शैवाचारसमोपेता शिवभक्ता द्विजातयः ॥ किमत्र बहुनोक्तेन योऽपि सोऽपि शिवाश्रितः ॥ संस्कार्यो गुर्वधीनश्चेत् संस्कारात् प्रतिभिद्यते " इत्युक्तत्वाच्च शिवसंस्कारार्हत्वं सर्वेषामिति सिद्धम् ।

न च स्त्रीशूद्रादीनां शिवसंस्कारार्हत्वेऽपि " स्त्रीशूद्रौ नाधीयेतां " इत्यादिना वेदाध्ययनस्यैव निषिद्धत्वे वेदार्थविचारानर्हत्वात् कथं ब्रह्मविद्यायां अधिकारः इति वाच्यम् । " तदभावाभिलापाच्च " तेषां शूद्रत्वादीनां धर्माणां अभावस्य अभिलापात् कथनादित्यर्थः । अभि-लप्यते च लिङ्गोपनिषदि " कैलासस्वरूपं धारणं देहं वेदस्वरूपं धारणं देहं ब्रह्मस्वरूपं धारणं देहं " इत्यादिना शिवसंस्कार संस्कृतानां शूद्रत्वाद्यभावः । अपि च वृद्धजाबालोपनिषदि—" शिवस्वरूपो भवति । शिवस्वरूपो भवति " इत्यादिना । तथा " ब्राह्मणा क्षत्रिया वैश्या शूद्रा ये चान्त्यजातयः ; लिङ्गधारणमात्रेण शिवा एव न संशयः " ।

किंच—श्री लिङ्गधारणमहाविभवेन सर्वे रुद्रा बभूवुरत एव न तारतम्यम् । एतन्मते स जननीक सुता इव स्युर्वीराः परस्पर सहोदर भावभाजः " इत्यभियुक्तोक्तेश्च ।

" यथा हि रजतं ताम्रं रसयोगात्सुवर्णतां । तथा शिवज्ञान-रसात् शूद्रादिश्शिवतां व्रजेत् " । " यस्यैवं शाम्भवी भक्तिर्गुरुकृपा-

वशात् पूर्वजात्यादिकं तस्य न स्मरेत्प्राकृतं हि तत्। अप्राकृतस्य भक्तस्य गुरुहस्तकृपाम्बुजात्। पुनर्जातस्यात्मजन्मजात्यादि न च कल्पयेत्। "पाषाणादि कृतं लिङ्गं यद्वत् पूज्यं प्रतिष्ठितम्। नीचवंशोद्भवश्चापि भक्तश्चेत् ईश्वरे तथा" इत्यादिना शूद्रत्वाद्यभावो कथ्यते।

किञ्च—भक्तस्य प्राक्तनं जन्म नाम जात्यादिकं च यत्। पृच्छेद्वा कथयेद्वापि स वै पातकिनां वरः॥" इत्यादिना संकृतस्य शूद्रत्वारोपणे निन्दापि निगद्यते। किंच—"न तत्र जातिभेदोऽस्ति न शुच्यशुचि कल्पना" इत्यादिना जातिभेदो निषिध्यते। किंच—स्त्रियो बालास्तथा वृद्धा खंजाः कुब्जाश्च पङ्गवः। उन्मत्ता बधिराः कुष्ठाशठाधूर्ताश्च वंचकाः। चोरा जारास्तथा वेश्याआचण्डालान्तसंभवाः॥ मल्लिङ्गधारणादेव मद्रूपा एव ते शिवे॥" इत्यादिना चाण्डालादीनामपि संस्कृतत्वे शूद्रत्वाभावो अभिलप्यते। "अन्त्यजो वापि मूर्खो वा पतितो ब्राह्मणोऽपि वा। शिवभावं प्रपन्नश्चेत् पूज्यः सर्वैसुरासुरैः" इति क्रियासार कारिकयापि तत्कथनात् शिवदीक्षासंस्कारेण शिवभावापन्नस्य शूद्रत्वाद्यभावोऽभिलप्यते। अत एव "संस्काराद्विज उच्यते। वेदाध्यायी तु विप्रः स्यात् ब्रह्म जानाति ब्राह्मणः" इति वज्रसूच्युक्तिरपि संगच्छते। इदमत्राशयः साक्षान्मोक्षसाधन विभूति-रुद्राक्ष-लिङ्गधारण-बोधक श्रुतिभिस्तद्धारकाणां सर्वेषां शिवत्वे प्रतिपादिते सर्वासां महानदीनां ऋजुकुटिलानां समुद्रं प्राप्तानां इयमियं नदीति भेदाप्रतीतिवत् ब्राह्मणादि शूद्राणां शिवसंस्कारसंस्कृतानां वीरशैवमतप्रविष्टानां वर्णभेदस्याप्रतीयमानत्वम्। किन्तु सर्वासां नदीनां समुद्रत्ववत् शिवत्वमेवेति निर्णीयते।

न च संस्कारकालावच्छेदेन शूद्रत्वाद्यभावेऽपि तदूर्ध्वं तत्संभव इति वाच्यम्। शिवदीक्षासंस्कारस्य यावज्जीवं सत्वात्। अत एव दीक्षाया एव मोक्षसाक्षात्कारणत्वेऽपि न ब्रह्मजिज्ञासाया वैयर्थ्यं तस्या यावज्जीव भावित्वं तु—

"आदेहान्तमियं दीक्षा पशुपाशविनाशिनी।
यावज्जीवमिदं दत्तमिष्टलिङ्गं समर्चयन्"
इत्यादिनावगम्यते।

किञ्च—"दीक्षया मुच्यते देही विविधात् भवबन्धनात्। शिवत्वं याति स सदा न पुनः पशुतां व्रजेत्" रसविद्धं यथा ताम्रं ताम्रभावाद्विमुच्यते। सुवर्णेन सहैकत्वं गतं तद्याति हेमताम्॥ "नवनीतं यथा तप्तं तत्स्वभावं परित्यजेत्। घृतस्वभावमापन्ने न पुनर्नवनीतता" यथा शुक्तिगतं तोयं मौक्तिकत्वं न मुञ्चति। एवं स शिवतां प्राप्तो न पुनः पशुता व्रजेत् "शिवत्वान्न च हीयेत-विमुक्तो दीक्षया भवेत्॥"

इत्यादिना संस्कृतस्य पशुत्वादि निषेधे शूद्रत्वाद्यभावस्य कैमुतिकन्यायसिद्धत्वं बोध्यम्।

चकारेण जीवत्व-प्रेतत्वाभावावपि ज्ञायेते।

ननु शूद्रत्वाद्यभावापादक शिवसंस्कारसंस्कृतानां अग्निदग्धानां सर्वेषां वस्तूनामिव पवित्रत्वे सिद्धे तैः साकं भोजनवासादिकं स्यादिति

चेदस्तु लिङ्गाङ्गसामरस्यापन्नैर्दीक्षितैः शिवज्ञानिभिः शिवारूढैः सिद्धैः साकं "सिद्धिमिर्लक्षयेत् सिद्धिं जीवन्मुक्तिं तथैव च" इत्युक्तेः। लिङ्गाङ्गसामरस्य विधुराणामदीक्षितानां लिङ्गधारणमात्रशालिनां शूद्रादीनां स्वैरिणां परिशुद्धत्वाभावात् तैस्साकं ये संप्रदायशुद्ध वीरशैवमतानुगा ब्राह्मणादयो न तत्र जातिभेदोऽस्ति" इति पारमेश्वरागमप्रामाण्यात् "——जाति विषयान् परित्यजेत्।" इति श्रुति प्रामाण्यात्। "अपि वा यश्चण्डालः शिवेति वाचं वदेत् तेन सह भुञ्जीत, तेन सह संवसेत्" इत्यस्य श्रीमरितोण्टदार्योद्धृतस्य श्रुतिवाक्यस्य प्रामाण्याच्च। "अभेद बुध्या भोजनादि संबन्धं कुर्वन्ति ते। शिवोक्तां जातिमर्यादां योऽतीत्य भुति वर्तते। स चण्डाल इति ज्ञेयः सर्वकर्मबहिष्कृतः॥ इति वाक्यावगतप्रत्यवायबद्धा देहान्ते नरक-यातनामनुभवन्तीति दिक्।

नत्वुत्तमकुलजानामेव तत्त्ववेतृत्वमिति नियमो दृश्यते, बहुषु ब्राह्मणेषु यस्यकस्यचिदेव तत्त्ववेतृत्वदर्शनात्। तिर्यग्गर्भसम्भवा अपि महान्तो दृश्यन्ते। तथा च ब्रह्मोत्तरखण्डे——"किं भाव्यं किमभाव्यं वा संसारेऽस्मिन् भ्रमात्मके। ईश्वरस्य तु या माया तस्या को वेत्ति चेष्टितम्" हरिणी गर्भिणी भूत्वा ऋष्यशृङ्गमसूयत। सुराष्ट्रस्य तथा राज्ञः करं स्पृष्ट्वा सुराङ्गना। क्षतक्षणात् गर्भिणी भूत्वा मनुं प्रासूत तापसम् "तथा सत्यवती कन्या शफरीगर्भसम्भवा। तस्यां व्यासः समुत्पन्नः सर्वविज्ञानसागरः"

वज्रसूच्यां च—"ऋष्यशृङ्गो मृग्यां, कौशिकः कुशास्तीर्णे, गौतमः शशपृष्ठे, जम्बुको जाम्बुक्यां, वशिष्ठो ऊर्वश्यां, वाल्मीको वल्मीक्यां, व्यासः कैवर्तक कन्यायां, अगस्त्यः कलशोद्भवः, विश्वामित्रः क्षत्रियः, नारदो दासी पुत्रः" इति। एवमादिदर्शनात्। न हि जन्मस्थान मात्रेण तत्त्वज्ञानिनो भवन्ति, किन्तु शिवदीक्षाग्नितप्तानां शिवज्ञानित्वं स्पष्टम्।

ननु शूद्रत्वादीनां जातीनां नित्यत्वात् कथं संस्कारस्य तध्वंस-रूपाभावकारणत्वमिति चेन्न। प्रलये सर्वेषां शूद्रादि व्यक्तीनां नाशे आधारं विना आधेयस्थायित्वप्रसङ्गात्। द्रव्यत्वव्याप्य व्याप्यजातेः परमाण्ववृत्तित्वनियमाच्च। न हि घटत्वादिकमाधेयं घटाद्याधारं विना स्थीयते। तस्मात् शूद्रत्वादीनामनित्यत्वात् तध्वंसो युज्यते। उक्तं च क्रियासारे—' वेदाचारयुतो विद्वान् ब्राह्मणो नाम नामतः। वेदाचारयुतो विप्रो ह्येतेष्वेकतवान् (?) द्विजः॥ अल्पाचारोऽल्पवेदश्च क्षत्रियो राजासेवकः। किञ्चिदाचारवान् वैश्यः कृषिवाणिज्यतस्तथा॥ :' शूद्रब्राह्मणः" इत्युक्तः स्वयमेव हि कर्षकः। असूयालुः परद्रोही चण्डालद्विज उच्यते॥ पृथिवीपालको राजा इतरे क्षत्रियास्तथा। धान्यादिक्रयवान् वैश्यः इतरे विश उच्यते॥ ब्रह्मक्षत्रियवैश्यानां शुश्रूषुः शूद्र उच्यते। कर्षको वृषलो ज्ञेय इतरे चैव दस्यवः॥ इत्यादिषु पुराणानां वचनेषु गुणैः पुनः। सम्बन्धात् ब्राह्मणादीनि नामानि न च जातितः। वैदिकत्वाद्वीरशैवा आचाराद्वैदिकोत्तमाः" इति।

तस्मात् शूद्रत्वादीनामागन्तुकत्वात् संस्कारवशात् तन्निवृत्ति-रुपपद्यते ।

नन्वस्तु शूद्रादीनां संस्कारार्हत्वे तद्वशात् तन्निवृत्तिः "न शूद्रे पातकं किञ्चित् न च संस्कारमर्हति । शूद्रश्चतुर्थो वर्णो एक जातिः" इत्यादि स्मृतिषु तेषां संस्कारानर्हत्वमेव ज्ञायते । तस्मादसंस्कृतानां शूद्रादीनां कथं ब्रह्मोपासने अधिकार इति चेत्—उक्त श्रुत्यागमैः स्वतः प्रमाणभूतैश्शूद्रादीनां संस्कारार्हत्वे सिद्धे तद्विरुद्धस्मृतिवाक्यानाम प्रामाण्यात् । शैवागमानान्तु स्वतः प्रामाण्यम् । "आगमानां तु सर्वेषां स्वतः प्रामाण्यमुच्यते" इत्यादिना क्रियासारे साधितम् । तत एवावगन्तव्यम् ।

किञ्च—न हि शूद्रादीनां संस्कारानर्हत्वं कुत्रापि प्रत्यक्षश्रुतिषु दृश्यते । अत एव शूद्रादि संस्कारानर्हत्वादिभिः तेषां संस्काराभावे स्मृतिरेव प्रमाणत्वेनोपन्यस्यते । नैतद्रोचते मनुष्यमात्रहितचिन्तकेभ्यो निष्पक्षपातबुद्धिभ्यः । "हृद्यपेक्षया तु मनुष्याधिकारत्वात् ।" इति सूत्रेण मनुष्यमात्रस्य ब्रह्मविद्यायामधिकारस्य सूत्रकाराभिप्रेतत्वेऽपि केषांचिदधिकारः केषांचिन्नेति कथनं रागद्वेषप्रयुक्तमिति वक्तुं शक्यते ।

ननु "तदभावाभिलापाच्चेत्यत्र तत्पदेन संस्कारस्यैव गृहीतुं शक्यत्वात् । तस्यैव पूर्वोक्तत्वात्, तत्पदस्य पूर्वोक्तपरामर्शकत्वात्

कथं पूर्वानुक्त शूद्रत्वादिकं गृह्यते इति चेन्न । तत्पदं कण्ठतः पूर्वोक्तमेव परामृशतीति सर्वत्र नियमाभावात् । अस्मिन्नधिकरणे शूद्रत्वस्यापि प्रसङ्गात् । पूर्वोक्तत्वस्य ज्ञायमानत्वात् । अन्यथा "तदभाव-निर्धारणे च प्रवृत्तेः" इति सूत्रघटक तत्पदेनापि शूद्रत्वं गृह्येत । शूद्रत्वस्य पूर्वानुक्तत्वात् । तस्मात् "आगमेषु पदार्था ये त एव व्याससूत्रके" इत्यादि वचनानुरोधेन श्रुत्यागमानुकूल्येनैव व्याससूत्र तात्पर्यं वर्णनीयमित्यस्माकमाशयः । अत एवोक्तमस्मिन्नधिकरणे "संस्कारैः संस्कृता ये तु ते सर्वेप्यधिकारिणः" इति । "शूद्रादीनां नाधिकार इति सम्यक् सुनिश्चितः" इत्यनेन असंस्कृतानां शूद्रत्वात् तेषामेव नाधिकारः इति तेषामाशयः ज्ञायते । अन्यथा "आगमेषु पदार्था ये त एव व्याससूत्रके" इत्यादि स्वोक्तेर्विरोधः स्यात् ।

किञ्च—"श्वपचोऽपि द्विजश्रेष्ठः शिवभक्त्या द्विजाधिकः । शिवभक्तिविहीनस्तु ब्राह्मणश्श्वपचाधमः । शिवसंस्कारहीनास्तु द्विजोऽपि श्वपचाधमः" ॥

काञ्चनं रजतं ताम्रं लोहं चेति चतुष्टयम् ।
यद्वद्वेति सुवर्णत्वं रसवेध प्रभावतः ॥
तद्वत् शूद्रादि पात्रं हि शिवमन्त्रात्मकेन तु ।
विद्धद्रसेन महता परब्रह्मत्वमेत्यलम् ।
शिवसंस्काररसम्पन्नः ह्ययं शूद्रोह्ययं द्विजः ।
लिङ्गभेदः कृतो येन रौरवं नरकं व्रजेत् ॥

इत्यादि शिवरहस्य वाक्यानां अप्रामाण्यं स्यात ।

ननु अस्मिन्नधिकरणे कारिकाटीकाकारेण निर्वाणमन्त्रिणा श्रीकरभाष्यकारेण श्रीपतिपण्डितेन शूद्रादीनां संस्काराभावस्य दर्शितत्वात् तयोर्भवदभिमत शिवदीक्षासम्पन्नत्वात् तदभिप्रायानुसारेणौचित्यात् किं तदभिप्रायविरुद्ध व्याख्यानेनेति चेन्न । निर्वाणमन्त्रिणा कारिकाकार-तात्पर्यगन्धलेशस्याप्यज्ञातत्वात् क्रियासारस्य साकल्येनाविचारितत्वात् मायावादिभिरिव शूद्रादिसंस्कारानर्हत्वं दर्शितम् । श्रीकरभाष्यकारेणापि पूर्वापरसूत्रपर्यालोचनाभावादेव दर्शितमिति मद्व्याख्यानपरिशीलनचतुरैः ज्ञायत एव । अनेन क्रियाङ्गभूत यज्ञोपवीत, मोक्षप्रयोजकविद्याङ्ग लिङ्गयोरुभयोरपि धृतत्वात् अनयोः स्वस्वकार्याजनौन्मुख्ये सति परस्पर-विरुद्ध प्रमदाकृष्टपुरुषस्येवान्येषां च एतदनुयायिनां न किमपि प्रयोजनं स्यात् । "नौकायामेकपादस्तु पादस्तीरं न मुञ्चति" इति न्यायेन अस्याधुनिकस्य भाष्यकारस्य भवसागरातिक्रमणं स्यात् । उक्तं च भृगुसंहितायां—"सदा सन्निहितः शैवश्चांण्डलो........नैव सर्वदा । गतं शूद्रस्याशूद्रत्वमन्यथा ब्राह्मणस्य तु"॥ शिवसंस्कारसम्पन्ने जातिभेदो न विद्यते" । उक्तं च गरुडपुराणे—"नमके चमके पञ्चब्रह्ममात्रे च वैदिके । तेषामप्यधिकारोस्ति शिवदीक्षाप्रभावतः ॥ उक्तं च शिवपुराणे—

"यथा पङ्के सरोजं स्यात् यथा काष्ठे हुताशनः ।
यथा सुवर्णं पाषाणे भक्तश्चाण्डालवंशजः ॥
स्त्रीवाथ पुरुषष्पण्डश्चण्डालो द्विजवंशजः ।
न जातिभेदो लिङ्गार्चासर्वे रुद्रगणाः स्मृताः ॥

शिवदीक्षाभिजातस्य पूर्वजातिं न चिन्तयेत् ।
सुप्रतिष्ठितलिङ्गे तु न यथा पूर्वभावना ॥

उक्तं च लैङ्गेऽपि—" दार्वश्मलोहमृद्रत्नजातलिङ्गं प्रतिष्ठितम् यथापूज्यं तथैव स्यात् भक्तश्चण्डलवंशजः ॥ उक्तं च शिवरहस्ये प्रदेशान्तरे—

" सर्ववेदेषु सर्वज्ञस्सर्वे यज्ञेषु दीक्षितः ।
महापातककोटिघ्नः श्वपचो लिङ्गपूजकः ॥

उक्तं च महाभारतेऽपि —
" जन्मना जायते शूद्रः कर्मणा जायते द्विजः ।
वेदशास्त्रार्थविद्विप्रो ब्रह्मजानाति ब्राह्मणः ॥ "

उक्तं च स्कान्दपुराणे—
" ये रुद्रपिण्डसंजाता ये वेदक्रमपाठकाः ।
ये विदुर्ब्रह्मवाच्यं श्रीरुद्रं ते ब्राह्मणाः स्मृताः ॥ "

इत्याद्यसंख्यातवाक्यानां प्रामाण्यात् शूद्रादीनां संस्काराधिकारत्वात् तेषां संस्कृतत्वे वेदाध्ययन वेदार्थविचाराद्यधिकारत्वात्, न हि तेषां संस्काराधिकाराभावात् न ब्रह्मविद्याधिकार इति वादिनां मतं शिष्टादरणीयं भवितुमर्हति ।

अदीक्षितानां सर्वेषां महावाक्यश्रवणादौ शिवज्ञानिनो न प्रवर्तन्त इत्याह—

सू. तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

वेदादि दीक्षात्रयेण योगाङ्ग-भोगाङ्गत्यागाङ्गापरनामक कारण-सूक्ष्म-स्थूलशरीरत्रयावच्छिन्न जीवत्रये भावादिलिङ्गत्रययोजनानन्तरं शिष्यस्य शूद्रत्वाभावं निश्चित्य गुरुः तस्य तत्त्वमस्याद्युपदेशे प्रवर्तते। तस्माद्दीक्षाभावे शूद्रादीनां महावाक्यश्रवणादौ नाधिकारः। अत्र "कोऽहमित्यब्रवीद्देही गुरुं परमकारणं गुरुस्तत्त्वमसीत्याह सत्यार्थं करुणानिधिः" इत्यादीनि वाक्यानि अनुसन्धेयानि।

एवं च लिङ्गधारणशालिनां शिवज्ञानिनां गौतमादिमुनीनां दीक्षया शूद्रत्वादीनामभावस्य निर्धारणे सति शरणागतशिष्यविद्योपदेशे प्रवृत्तेर्दर्शनात्। गौतमादीनां लिंगधारणशालित्वे—" ब्रह्मविष्ण्वादयो देवा मुनयो गौतमादयः। धारयन्ति सदा लिंगमुत्तमांगे विशेषतः" इत्यादीनि प्रमाणानि द्रष्टव्यानि। तस्मान्न दीक्षितस्य ब्रह्मविद्याया-मधिकारः। अदीक्षितस्य मलत्रयनिर्ध्वंसाभावात्। "अतप्ततनुर्न-तदामोऽश्नुते" इति श्रुतेः। अतप्ता वेधा-मनु-क्रियादीक्षात्रयेण निर्दग्धा पापपञ्जरा तनुर्यस्य सा न भवतीत्यतप्ततनुः, दीक्षात्रयरहितः, अत एव आमः—अपरिपक्वान्तःकरणः सन् तत् शिवस्वरूपं न अश्नुते। एतद्ऋङ्मन्त्रेण " अमृतस्य देवधारणो भूयासं " इत्याद्यनेक श्रुतिभिश्च मुक्त्यसाधारणकारणताग्राहक व्यतिरेकान्वयदर्शनात्। "लिंगांग-संगिनो वत्स पुनर्जन्म न विद्यते" इति शङ्करसंहितावचनानुरोधेन च शिवदीक्षाया एव मुक्त्यसाधारणकारणत्वात्। तदभावे तत्कारणक वेदवाक्यश्रवण वेदाध्ययनादि प्रति पद्यते इत्याह।

सू॰ श्रवणाध्ययनार्थ प्रतिषेधात् ॥ ३८ ॥

"ज्ञानादीनामुपायानां दीक्षाकारणमर्यते । दीक्षयैव विमोक्षः स्यादुपायास्तन्नियामकाः ॥" ज्ञानादीनां वेदार्थज्ञानादीनां, आदिपदेन श्रवणादेः गृत्यमाणात्वात्, दीक्षारूपकरणाभावे तत्कार्यरूप श्रवणाध्ययनादीनां अभावात् नैवादीक्षित शूद्रादेर्ब्रह्मविद्यायामधिकारः तस्मात् सर्वेऽपि मानवा दीक्षासम्पन्नाः सन्तः वेदश्रवण वेदाध्ययनादिना मुक्ता भवेयुरिति सूत्र तात्पयम् । अत एवोच्यते दीक्षारूपोपायस्य सर्वश्रेष्ठत्वम् । तथा च— "दीक्षैव मोक्षदा पुंसां चिदचित् शक्तिकारणम् । नास्ति दीक्षा समं तीर्थं नास्ति दीक्षासमं तपः । नास्ति दीक्षासम शीलं । नास्ति दीक्षासम् धनम् ॥ नास्ति दीक्षासमो धर्मो । नास्ति दीक्षासमो गुणः नास्ति दीक्षासमं ज्ञानं नास्ति दीक्षासमं कुलम् । सा दीक्षा गुरुणा कार्या तस्य भेद इहोच्यते" इति ।

शिवदीक्षायाः स्वीकाराभावे प्रत्यवायोऽपि दृश्यते । "लिङ्गस्य धारणं यस्य स्थूलदेहे न विद्यते । तद्देहं निष्फलं ज्ञेय जीवत्यक्तशरीरवत् । यथा श्मशानगं काष्ठ अनर्हं सर्वकर्मसु । तथा लिङ्गविहीनस्तु सर्वकर्मबहि कृत" यस्य वक्षस्थले लिङ्गं कण्ठे रुद्राक्षमालिका । न फाले भूतिरेखाश्च तं त्यजेदन्त्यजं यथा ॥ लिङ्गस्य धारणं विप्रा मनसापि न लघयेत् । श्रुत्या विधीयते यस्मात् तत्यागी पतितो भवेत् ॥ ब्राह्मणानां शिवो देवस्तस्मात्तल्लिङ्गधारणम् । कर्तव्यं ब्राह्मणानान्तु वेदवेदान्तशासनात् इति । लिङ्गविहीनस्य सर्ववैदिक

कर्मबहिष्कृतत्वे सिद्धे वेदश्रवणाध्यनादिकस्य सुतरां निषेधोऽवगम्यते । एवं व्यवस्थिते परादृतानि " तस्माच्छूद्रसमीपे नाध्येतव्यम् " " शूद्रस्य न मितिं दद्यात् " इत्यदीन्यपि वाक्यानि अदीक्षित समीपेऽध्ययनादिकं निवारयन्तीति बोध्यम् । दीक्षैव मोक्षकारणमिति व्यतिरेकमुखेनोक्त्वान्वय-मुखेन " स्मृतितोऽपि दीक्षितस्यैव ब्रह्मविद्यालाभो भवति । तल्लाभे मोक्ष इत्याह ।

सू. स्मृतेश्च ॥ ३९ ॥

" कीटो भ्रमरयोगेन भ्रमरो भवति ध्रुवम् । मानवः शिवयोगेन शिवो भवति सर्वदा " इति स्मृतेश्चेत्यर्थः । तथा चोक्तरीत्या दीक्षात्रयेण शिवात्मकलिङ्गयोगे सति श्रवणाध्यनादिकं कृत्वा शिवो भवति, शिवस्वरूपो भवति इत्यर्थः । अत एवोक्तं " यदा गुरुवरः सम्यक् कथयेत्तन्न संशयः । तदैव जायते मुक्तिर्यन्त्रस्तिष्ठति केवलः " इति । अत एवाम्नायेषु यदुच्यते—" शिवो भूत्वा शिवं यजेत् " इति तस्य शिवदीक्षासंपन्नो भूत्वा शिवलिङ्गरूपं यजेत् इत्यर्थः संगच्छते ।

उक्तं च शिवधर्मेऽपि—" नारुद्रः संस्मरेद्रुद्रं नारुद्रो रुद्रमर्चयेत् ॥ नारुद्रः कीर्तयेद्रुद्रं नारुद्रो रुद्रमाप्नुयात् ॥ इति । तस्मात् दीक्षा सम्पन्नस्य शिवत्वसमावेशात् " यः शिवत्वसमावेशो वेधादीक्षेति सा मता " इत्युक्त्वा—" शिवो भूत्वा शिवं यजेदिति श्रुतिः शिवयजनं विधत्ते । दीक्षासंस्कारस्य लिंगधारणादि पञ्चाचाराष्टावरणयोग्यता निर्वहणांगत्वेन शेषशेषिभावदर्शनात् शिवत्व समावेशस्य वेधादीक्षात्व-

मुक्तमसंगतमिति चेन्न। स्वर्गकामो ज्योतिष्टोमेन यजेत", "स्वर्गकामो इष्ट्या यजेत" इति। तत् स्वर्गसुखविशेषस्य वैलक्षण्यं। ज्योतिष्टोमेन अन्यत् स्वर्गरूपं सुखं अन्यत् सुखमिष्ट्या इतीव। शिवत्वसमावेशस्य वैलक्षण्यात् वेधादीक्षायां यत् किंचित्समावेशस्य अंशविरूपो उपचय क्रमेण सम्भवात्, दीक्षाभूतिधारण रुद्राक्षधारण पंचाक्षरोपदेशादिषु पूर्वं पूर्वविलक्षण शिवत्वसमावेशस्य सुवचत्वात्। पूर्वतन्त्रानुरोधेनैव यश्शिवत्वसमावेशो। वेधादीक्षेति सा मता॥ मन्त्रदीक्षेति सा चोक्ता मन्त्रमान्त्रोपदेशिनी। लिङ्गोपदेशिनी प्रोक्ता क्रियादीक्षा क्रियोत्तरा॥ इति उक्तत्वात्। अयमेव उत्पलदेवाचार्येणाप्युक्तम् शिवस्तोत्रावल्यां—"शिवेभूत्वा यजतेति" भक्तोभूत्वेति कथ्यते। त्वमेव हि वपुस्सारं भक्तैरध्व सु शोधितम् इति। तथाचोक्तस्मृत्या शिवदीक्षासम्पन्नस्यैव शिवत्वसमावेशापन्नत्वात् स एव श्रवणाध्ययनादिकर्माहेति नान्य इति सिद्धम्"

एवं च अदीक्षितानां पूर्वजात्यादि सत्वात् शिवत्व समावेशाभावात् "शिवो भूत्वा शिवं यजेदिति विधानाच्च न तेषां शिवलिङ्गरूपब्रह्मोपासने अधिकारः। यजनं चात्र धारणम्" त्र्यम्बकं यजामहे इत्यादेरुपबृंहणवाक्ये "यजामहे धारयामो" इत्युपबृंहणत्वात् माहेश्वर क्षेमराजसुधीभिरपि स्वस्वरूप शिवसमावेश भक्तिशास्येव यजनमित्युक्तत्वाच्च।

यद्यपि पराहतं "अथ हास्यवेदमुपशृण्वतः" इत्यादिकमपि वाक्यम्। तद्भाष्ये ....स्येतत् पदस्य दाक्षित परत्वेन व्याख्याने

नास्माकं विरोधः । तदाप्यहिंसा परिपालनशालिनां वीरशैवानां तादृश-वाक्योच्चारणस्याप्ययुक्तत्वात् । तदुच्चरणे तदुल्लङ्घने वा कस्याश्चिद्धिंसायाः संभवात् । किञ्चि—पाथकादीनामकस्मात् तच्छ्रवणे तादृशदण्डानर्हत्वात् । तस्यन्याय्यत्वाच्च " अदण्ड्यान् दण्डयन् राजा " इत्यादिना विचारमन्तरा दण्डकरणे प्रत्यवायदर्शनात् । धूर्तैरसूयान्धैः कल्पितं तादृशवाक्यं विवेकहीनो उन्मत्तोक्तमिव नादरणीयमिति ।

एवं च श्रीमद्वीरशैवाचारनिरतैः सदा लिङ्गाङ्गसंयोगसन्निहितैः गुरुलिङ्गजङ्गम पादोदकप्रसादासक्तैः विभूतिधारण, रुद्राक्षधारण पञ्चाक्षर जपयुक्तैः वेदान्तागमोदित वीरमाहेश्वरोचित तत्त्वमस्यादि महावाक्यार्थ लिङ्गाङ्गसंयोगब्रह्मात्म्यैक्यज्ञाननिष्ठैः सदाचारप्रवर्तकैश्शिवभक्तैः शिवेतरदेवतास्मरणसंस्तवन दर्शनस्पर्शनादि विमुखैः श्रीनन्दिनाथ श्रीभृङ्गनाथ श्रीवीरभद्रेश्वरादि प्रमथगणैः कलविकरणरुद्र श्रीकण्ठरुद्र, नीललोहितरुद्रकालाग्निरुद्रादिरुद्रगणैः श्रीमरुलसिद्धरेवणसिद्धादि आचार्य-गणैः गौतमदूर्वासागस्त्योपमन्युवामदेवादिमुनिगणैः शूद्रादिसंस्कारा-नर्हत्वस्यानभ्युपगतत्वात् ।

महाजनमार्गावलम्बिनो वय " यः स्थापयितुमुद्यक्तः श्रद्धयैवाक्षमोऽपि सन् । धर्मं स्थापयितुं पुंसां यतमानः स हि द्विजाः । रक्षणं कुरुते यस्तु सोऽपीश्वरपदं व्रजेत् । यः शाम्भवमहाधर्मं स्थापनार्थं त्यजेदसून् । स गणेशत्वमाप्नोति शङ्करस्य प्रसादतः " इत्युक्तरीत्या वस्तुतो वीरशैवसिद्धान्तपरक ब्रह्मसूत्राणां तन्मात्रपरकतया व्याख्यानोद्यम-निरतास्मः । तस्मान्न स्वकपोलकल्पितत्व दिदोषस्पर्शलेशस्यायवकाशः इति ॥

प्रासङ्गिकमधिकारिनिरूपणं कृत्वा प्रकृतमनुसरति—

सू. कम्पनात् ॥ ३९ ॥

"यदिदं किञ्च जगत्सर्वं प्राण एजति निसृतम्" इति वाक्ये प्राणशब्देन परशिवब्रह्मोच्यते। कुतः कम्पनात्। उत्पन्नसकलप्रपंचस्य परशिवब्रह्मानुशासनेन कम्पनादित्यर्थः। प्राणवायोस्सकलप्रपञ्चकम्पनहेतुत्वाभावात्। परशिवस्य कल्याणमूर्तित्वेऽपि सर्वनियामकशक्तिमत्वात् सर्वभयदर्शकत्वं पवनादीनामीशशासनभयादेव। पवमानत्व दीनां श्रवणात्। तस्यैव सकलप्रपञ्च भयहेतुत्वम्।

एवं ज्योतिश्शब्दवाच्यत्वमपि परशिवस्यैवेति दर्शयति—

सू. ज्योतिर्दर्शनात् ॥ ४० ॥

"एष संप्रसादो अस्मात् शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रुपेणाभिनिष्पद्यते" इत्यत्र ज्योतिश्शब्देन परशिवब्रह्मोच्यते, न तु भौतिकं ज्योतिर्गृह्यते। कुतः दर्शनात्। "तं देवा ज्योतिषां ज्योति रित्यादौ ज्योतिश्शब्दस्य परशिवब्रह्मणि प्रयोगदर्शनात्। "स उत्तमः पुरुष" इत्यनेन ज्योतिश्शब्दनिर्दिष्टस्य उत्तमपुरुषत्वाभिधानात् परशिवब्रह्मनिर्णयाच्च ज्योतिश्शब्दवाच्यत्वं परशिवस्यैवेनि सिद्धम्। हरिवंशे कृष्णं प्रति परमेश्वरवचनं च "यानि नामानि गोविन्द तव लोके महीयते। तान्येव मम नामानि नात्र कार्या विचारणा" इति वाक्यदर्शनात् पुरुषोत्तमशब्दवाच्यत्वं तस्यैव सिद्धम्।

आकाशशब्दवाच्यत्वं शिवस्यैवेति दर्शयति—

सू. आकाशो अर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

आकाशो वै नाम न मरूपयोर्निर्वहिता ; ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा इत्यत्र श्रुतौ नामरूपनिर्वोढृत्वेन श्रूयमाण आकाशः परमात्मैव न भूताकाशादि । कुतः "अर्थान्तरत्वादि व्यपदेशात् । अर्थानां-पदार्थानां, अन्तरत्वादिव्यपदेशात् नामरूपात्मक स्थूलसूक्ष्म चिदचित्प्रपञ्चान्तर्यामित्व कथनादित्यर्थः । आदिना "ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इत्यादिना निर्दिष्टस्य अमृतत्वादितद्धर्म-व्यपदेशोऽपि ग्राह्यः । न हि भूताकाशादौ अमृतत्वादि धर्मास्सम्भवन्ति । अतः परमेश्वर एव आकाशशब्दवाच्यः ।

कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु, हृद्यन्तर्ज्योतिः पुरुषः इत्यत्र विज्ञानमयशब्दवाच्यत्वं मुक्तजीवस्य न तु बद्धजीवस्येति दर्शयति—

सू. सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादित्यनुवृत्तिः । सुषुप्त्युत्क्रान्त्योः सुषुप्त्यवस्थाया-मुत्क्रान्त्यवस्थायां च जीवब्रह्माभेदस्य भेदेन द्विवारं प्रतिपादितत्वात् । तथाहि—अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेदनान्तरं इति "अयं शारीर आत्मा प्राज्ञेनात्मना न्वारूढ उत्सर्जन्याति" इति च जीवाद्व्यति रिक्ततया परमेश्वरस्य व्यपदेशात् इत्यर्थः ।

किञ्च हेत्वन्तरमाह —

सू. पत्यादिशब्देभ्यः ॥ ४३ ॥

"स सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति स न साधुना कर्मणा भूयान् नो एवा साधुना कनीयान् एष सर्वेश्वर एष भूतपतिरेष भूतपालः" इत्युक्तत्र ईशानादि पदप्रयोगादपि कतमात्मेत्यादि वाक्यस्य मुक्तजीवपरकत्वनिर्णयादित्यर्थः ।

इति श्री शाङ्करीवृत्तौ प्रथमाध्यायस्य तृतीयः पादस्समाप्तः

---

एवं वेदान्तानां सर्वेषां परशिवप्रतिपादकत्वे सिद्धेऽपि कासु चित् शाखासु प्रधानजगत्कारणत्व प्रतिपादकशब्दानां दृष्टत्वात् कथं तस्याशब्दत्वमित्याशंकायां चतुर्थः पाद आरभ्यते ।

नत्वा श्री सर्वविद्येशं धृत्वा शिवकलां हृदि ।
स्तुत्वा गुरूंश्च तुर्यस्य वृत्तिः पादस्य कथ्यते ॥

## प्रथमाध्याये चतुर्थः पादः ।

सू. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

अनुमानिक सांख्यपरिकल्पतं प्रकृत्यादि, एकेषां, शाखिनां शाखासु "महतः परमव्यक्तं अव्यक्तात्पुरुषः परः" इत्यत्र प्रधानं अव्यक्तशब्देन प्रतिपाद्यते । एवं जातीयकेषु श्रुतिषु सांख्यमत पदार्थानां श्रूयमाणत्वात् कथं प्रधानस्याशब्दत्वमिति चेन्न । "शरीर-

रूपकविन्यस्तगृहीतेः "शरीरस्य, रूपकविन्यस्तस्य पूर्ववाक्ये" आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यत्र रथत्वेन निरूपितस्य गृहितेः। अत्र अव्यक्तशब्देन ग्रहणादित्यर्थः। अव्यक्तशब्दस्य कथं शरीरपरकत्वं? इत्याशंकायामाह दर्शयति चेति" पूर्ववाक्यतात्पर्यं पर्यालोच्यमानं अव्यक्तशब्दस्य शरीरपरत्वं दर्शयिति इत्यर्थः। तथा हि—"आत्मानं रथिनं विद्धि शरीरं रथमेव च। बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः "इति शरीरादेः रथादि रूपं दर्शयति। अनन्तरं" इन्द्रियेभ्य. परा ह्यर्थाः अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्। सा काष्ठा सा परा गतिः।

ननु शरीरस्य व्यक्तत्वात् कथं तस्य अव्यक्तशब्देन ग्रहणमित्यत्राह।

सू. सूक्ष्मन्तु तदर्हत्वात्॥ २॥

तु शब्दः शङ्कानिरासार्थः सूक्ष्मं लिङ्गशरीरं अव्यक्तशब्देन गृह्यते; कुतः तदर्हत्वात्, अव्यक्तशब्दार्हत्वादित्यर्थः। तत्कार्यत्वात् स्थूलशरीरस्य कार्यकारणयोरभेदात् अव्यक्तशब्देन तस्यापि ग्रहणे न दोषः।

ननु "महतः परमव्यक्तं" इत्यत्र महतः आत्मनः परत्वं कथमव्यक्तस्य शरीरस्य इति चेदाह—

सू. तदधीनत्वादर्थवत् ॥ ३ ॥

तदधीनत्वात्, शरीराधीनत्वात्, अर्थवत्, शरीरस्य आत्मनः परत्वं अर्थवदित्यर्थः। इन्द्रियव्यापारस्य अर्थाधीनत्वाद्यथा इन्द्रियेभ्यः परत्वमर्थानां तथाआत्मनो बन्धमोक्षादि व्यवहारस्य शरीराधीनत्वाच्छरीरस्यात्मनः परत्वं अर्थवज्जायत इत्यर्थः।

प्रकृतिपुरुष विवेकज्ञानात् मोक्ष इत्यङ्गीकुर्वाणैस्सांख्यैः प्रधानमपि ज्ञेयत्वेनोक्तं स्यात्। न चात्रज्ञेयत्वेन प्रधानमुच्यते इत्याह—

सू. ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वस्य अवचनात् अकथनादित्यर्थः, अव्यक्तमात्रशब्दश्रवणात् न प्रधानमिहाव्यक्तं भवति।

ननु ज्ञेयत्वमप्यस्योक्तमित्यत्राह --

सू. वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

"अशब्दमस्पर्शमरूपमव्ययं। तथाऽरसं नित्यमगन्धवच्च यत्" अनाद्यनन्तं महतः परं ध्रुवं। निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥ इत्युत्तरवाक्य शब्दादिरहितस्य प्रधानस्य ज्ञेयत्वं वदतीति चेन्न। प्राज्ञो हि—अत्र निचाय्यत्वेनोच्यते। कुतः प्रकरणात्, प्राज्ञस्यैव प्रकरणात्, "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इत्याद्युपक्रमात् न प्रधानस्य प्रकरणमस्ति। न हि" प्रधानमात्रं ज्ञात्वा

मृत्युमुखात् मुच्यते इति सांख्यै रङ्गीक्रियते। अङ्गीक्रियते च-चेतन पुरुषविज्ञानात् मृत्युमुखान्मुच्यत इति। तस्मात् शब्दादिविहीनस्य प्राज्ञस्यैवात्मनो ज्ञेयत्वं न प्रधानस्येति भावः।

इतश्च नाव्यक्त प्रधानमित्याह·—

सू॰ त्रयाणामेव चैव मुपन्यासः प्रश्नश्च ॥ ६ ॥

त्रयाणां अग्निजीवेश्वराणां "सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्धधानाय मह्यम्।" इत्यग्निविषयः प्रश्नः। "योऽयं प्रेते विचित्रामनुष्येऽस्तीत्येके नायमस्तीति चैके" एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" इति जीवविषयकः प्रश्नः। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्, अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद"। इतीश्वरविषयः प्रश्नः। एवमुपन्यासोऽपि, प्रतिवचनमपीत्यर्थः "लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा" इति श्रुतेः। "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुशयन्ति यथा कर्म यथाश्रुतम्"इति श्रुतेः। "न जायते म्रियते वा विपश्चित्" इति श्रुतेश्च। अग्निजीवेश्वराणां प्रतिवचनं दृश्यते प्रधानविषयक प्रश्नप्रतिवचनयोरसत्त्वात् न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा।

किञ्च हेत्वन्तरमाह—

सू. महद्वच्च ॥ ७ ॥

"बुद्धेरात्मा महापरः" इत्यत्रा न प्रधानविकारो महान्भवति, आत्मशब्दप्रयोगात् । महच्छब्दस्य आत्मवाचकत्वात् अव्यक्तशब्दस्यापि शरीरवाचकत्वमित्यर्थः । तस्मान्न सांख्याभिमतप्रधानस्य शब्दवत्त्वम् ।

नन्वन्यत्र जगत्कारणत्वेन श्रूयमाणस्य प्रधानस्य । अत्र तस्याप्रकृतत्वेऽपि शब्दवत्त्वमस्तु इति चेदाह—

सू. चमसवदविशेषात् ॥ ८ ॥

ननु "अजामेकां लोहितशुक्लकृष्णां" इत्यादि श्रुत्या सांख्यसिद्ध प्रधानस्य त्रिगुणात्मकस्योपदेशात् । तस्य कथमशब्दत्वमिति चेन्न । अविशेषात् । अस्मिन् वाक्ये प्रधानस्य कस्यचिद्विशेषक-शब्दाभावात् ।

"अर्वाग्बिल ऊर्ध्वबुध्नश्चमसः" इत्यत्र चमसवत् यथात्रायमसौ चमस इति विशेषावगत्यभावात् न विशेषनिर्णयः तथेत्यर्थः ।

ननु इदं तच्छिर इत्यादि वाक्यशेषात् शिरश्चमसनिर्णयः । अत्र कथमिति चेदाह—

सू. ज्योतिरुपक्रमात्तु तथाह्यधीयते एके ॥ ९ ॥

"यदग्ने रोहित रूपं तेजसस्तद्रूपं, यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" इत्येके शाखिनश्छान्दोग्येऽधीयते। तस्मात् परमशिवाविर्भूत ज्योतिः तेजोऽबन्नलक्षणाप्रकृतिरेवाजा शब्देन गृह्यते। अत्र प्रकृति शक्तिरेव, न तु तदतिरिक्तेत्यर्थः। कुतः? "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढां" इत्युपक्रमात्। वाक्यशेषेऽपि "मायान्तु प्रकृतिं विन्द्यात् मायिनं तु महेश्वरमिति" तस्या एव शैवशक्तेर्दर्शनात्। न प्रकृतिः प्रधानं सांख्यसिद्धं अजाशब्देनोक्तुं शक्यते। न वा मिथ्याभूता मायावादिसिद्धाऽविद्या। "परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुत्या शिवशक्तेः शिवरूपावगमात्। अत्रापि मं शिवं अयति गच्छत्य-विनाभावसम्बन्धेन वर्तते इति व्युत्पत्तिमाश्रित्य मायां शिवसमवेतां विमर्शशक्तिं प्रकृतिं प्रकृष्टा कृतिः जगत् सृष्ट्यादि पञ्चकृत्यरूपा यस्या स्तामित्यर्थः तत्कार्यरूपेण गुणशक्तेस्त्रैरूप्यमुक्तम् (लोहित शुक्लकृष्ण पदत्रयेणेत्यर्थः) तथाचोक्तं कारिकाकारेण।

तेजोबन्नप्रकृतिश्चाप्यजा शब्देन गृह्यते।
तथ ह्येकेऽधीयतेऽत्र प्रकृतिश्शक्तिरेव च ॥

ननु परमशिवाविर्भूत तेजोबन्नात्मिकाया अवान्तरशक्तेः परशिवकार्यत्वात कथमजाशब्देन ग्रहीतुं सा शक्यतेत्याकांक्षायामाह—

सू. कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

च शब्दः पूर्वपक्षनिरासार्थः । अवान्तरकार्यरूपप्रकृतेः नाजात्वानुपपत्तिः । कल्पनोपदेशात् । साम्योपदेशात् । अविरोधः अजाशब्दस्य विरोधो नास्तीत्यर्थः । मध्वादिवत् । "असौ वा आदित्यो देवमधु" इत्यत्र यथादित्यस्य मधूत्वकल्पनमुच्यते तथात्रापि लोकप्रसिद्ध अजासादृश्यमुच्यते । न चात्र प्रकृतेः स्वातन्त्रेण कारणत्वमिति वाच्यम् । "छंन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भवायच्च वेदा वदन्ति"॥ "अस्मान्मायी सृजते विश्वमेतत् । तस्मिश्चान्यो मायया सन्निरुद्धः ॥" इति श्रुत्या मायाविशिष्टस्यैव शिवस्य कारणत्व श्रवणात् । इच्छाशक्त्यंशाविर्भूतस्थूलमायाशक्तेरेव सृष्टिदशायां कार्यत्वम् । मोक्षदशायां विलीनत्वं च । न तु शिवाभिन्नेच्छाशक्तेः । तस्मात् शिवाविभिक्त शक्तेरजाशब्दवाच्यप्रकृतेः परशिव निष्ठकारणत्वं न विरुध्यते । इत्यपि बोध्यम् । शक्तेश्शिवाभिन्नत्वे शक्तिरस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः । शक्तिस्तु शक्तिमद्व्यतिरिक्ता हि न क्वचित् ॥ तादात्म्यमनयोर्नित्य वह्निदाहकशक्तिवत् ॥ शक्तिशक्तिमतो यस्माद भेदः सर्वदा स्थितः" इति ।

प्रधानस्य जगत्कारणत्वं निरस्य पञ्चविंशति तत्त्वानि वैदेकानीत्यांक्य निराकरोत्यधिकरणान्तरेण

सू. न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥

संख्योपसंग्रहात् " यस्मिन् पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः इत्यत्र पञ्चविंशति संख्या श्रवणात् ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्त्वविकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ "

इति सांख्यसिद्धानि पंचविंशति तत्त्वानि वैदिकानीति वक्तुं शक्यत्वे कथं मूलप्रकृतेरवैदिकत्वमिति चेत् न । नानाभावात् नानात्वात् । पञ्चविंशति संख्याकपदार्थानां बहूनां सत्वात् । अतिरेकाच्च आकाश-पुरुषकालादीनां पंचविंशति संख्यातिरिक्त....न् षट्त्रिंशत् संख्योपपत्तेः । न पंचविंशतिसंख्या प्रतिपत्तिः । नन्वत्र कालादितत्त्वानामदर्शनात् कथं षट्त्रिंशत्तत्वसंख्या प्रतिपत्तिरिति चेन्न । वृद्धजाबालोपनिषदि पशुपाशपतिपदार्थनिरूपणानन्तरं शिवस्य पंचकृत्यकर्तृत्वं प्रसाध्य "पुनस्तगुँ होवाच कानि षट्त्रिंशत् तत्त्वानीति । स तस्मा आह शिव-शक्तिस्सदाशिव-ईश्वरशुद्धविद्या इत्येतानि शुद्धानीत्यादिना षट्-त्रिंशत्तत्वश्रवणात् । अपि च सिद्धान्तागमोपबृंहित श्रुतिवाक्यैरपि षट्त्रिंशत्तत्वानि वैदिकानीति ज्ञायन्ते । तथ हि—

षट्त्रिंशत् तत्त्वरूपत्वं तल्लिंगयेव सर्वदा ।
पञ्चब्रह्माभिर्धैर्मन्त्रैः प्रोच्यचे परमार्थतः ॥
सद्योजाततत्वरूपाय भूतत्वाय नमोऽस्तु ते ॥

इत्यादिना "शिवतत्त्वात्मने तुभ्यं ओंकाराय नमो नमः" इत्यन्तेन तस्मान्न सांख्यसिद्ध पञ्चविंशति तत्त्वानि ।

नन्वत्र पंचजनशब्देन के विव....... त आह

सू. प्राणादयो वाक्यशेषात् ॥ १२ ॥

"प्राणस्य प्राणमुत चक्षुषश्चक्षुः ....... न्नस्यान्नं मनसो...."

पुनर्हेत्वन्तरमाह—

सू. ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एतेषां कण्वादीनां अन्ये अन्न शब्दे असति सति तद्देवाज्योतिषां ज्योति."

इत्यत्र ज्योतिश्शब्देन पंचपंचजना इन्द्रियाणीति ज्ञायन्ते ।

आत्मन आकाशः सम्भूतः इत्यत्र आकाशस्यैव ब्रह्मकार्यत्वाव गमात् ब्रह्मकार्यत्वं पञ्चमहाभूतानामयुक्तमिति शङ्कायामाह—

सू. कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

अकाशादिषु आकाशादिपञ्चमहाभूतेषु कारणत्वेन ब्रह्मणः साक्षात्कारणत्वेनोक्तत्वात् "एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च" इति श्रुतेः । यथा परशिवब्रह्मकार्यत्वं महाभूतानां तथा 'आकाशाद्वायु"

रित्यादावपि तत्र कारणत्वेन व्यपदिष्टस्य परशिवस्य उक्तेः कथनादित्यर्थः तथा च "आकाशाद्वायुः वायोरग्निः"। इत्यादावपि स्वशक्त्यंश परिणता शुद्धमायावच्छिन्न ईश्वरादाकाशस्य जनिमत्त्वम्। तदाकाशावच्छिन्न शिवदेव वायोरुत्पत्तिरित्यादिकं ज्ञातव्यम्।

ननु "असद्वा इदमग्र असीदित्यत्र" असत एव शून्यस्य जगत्कारणत्वश्रवणात् कथं शिवस्य जगत्कारणत्वं इत्याह—

## सू. समाकर्षात् ॥ १५ ॥

"सोऽकामयत" "बहुस्यां प्रजायेय" इति पूर्वनिर्दिष्टस्य सर्वज्ञस्य सर्वशक्तिकस्य शिवस्य "असद्वा इदमग्र आसीदिति" श्रुत्या समाकर्षात्। एवं च नामरूपव्याकृत वस्तुपरकत्वं सच्छब्दस्य, तदव्याकृतवस्तुपरकत्वं असच्छब्दस्येति निर्णयात् न शून्यपरकत्वं असच्छब्दस्योति बोध्यम्।

एतावता प्रधानजगत्कारणत्ववादं निरस्य निर्विशेष ब्रह्मसन्निधानात् प्रधानस्य जगत्कारणत्वव्यवस्थापकं सार्वत्रिकजीवब्रह्माद्वैतवादं निराकरोत्यधिकरणान्तरेण।

## सू. जगद्वाचित्वात् ॥ १६ ॥

ब्रह्म ते ब्रवाणीयुपक्रम्य "यो वै बालाक एतेषां पुरुषाणां" कर्ता यस्य चैतत्कर्म सवै वेदितव्यः "इत्यत्र वेदितव्यत्वेन श्रूयमाणः परशिव एव न तु जीवः" तस्य सकलजगत्कर्तृत्वासम्भवात्।

नन्वत्र कर्मशब्दस्य धर्माधर्मरूपापूर्ववाचित्वात् । तस्य व्यपगत कर्मसम्बन्धे परशिवे सत्वायोगात् । कथं परशिवस्य वेदितव्यत्वेन वक्तुं शक्यते इति चेन्न । जगद्वाचित्वात् एतच्छब्दसमभिव्याहृत कर्मपदस्य क्रियते इति व्युत्पत्या जगद्वाचकत्वादित्यर्थः । एतेन जीवब्रह्मणोः पारमार्थिक भेदोपादानात् निरस्त एव शुद्धाद्वैतवाद इति बोध्यम् ।

शङ्करीवृत्तिः समाप्ता । इति ब्रं. श्री डमचिगी वृष्टिमठाध्यक्षेण
शङ्करशास्त्रिणा विरचिता ब्रह्मसूत्र वृत्तिः समाप्ता ।

## अथाक्रियासारे वाक्यान्वयादित्यादि सूत्रार्थविचारः

वाक्यान्वयात्परं ब्रह्म यल्लिङ्गं हृदयाम्बुजे ।
उपास्यं तत्परं ब्रह्म वेदितव्यं मनीषिभिः ॥ ४४३ ॥
लिङ्गं प्रतिज्ञासिद्धेश्च हृदब्जे धार्यमव्ययम् ।
आश्मरथ्यो मुनिस्तत्र मन्यते पूनरादरात् ॥ ४४४ ॥
एवं भावादौडुलोमिरित्येव ह्युक्तमिष्यते ।
अवस्थितेः काशकृत्स्न इति तद्ब्रह्मजीवयोः ॥ ४४५ ॥
न भेदोऽपि न चाभेदः सामरस्यात्तयोर्ध्रुवम् ।
भेदाभेदाभ्युपगमाद्विस्फुलिङ्गाग्निवत्तथा ॥ ४४६ ॥
जीवो ह्युपासकः साक्षादुपास्यं ब्रह्मकेवलम् ।
लिङ्गाङ्गसामरस्येन भेदाभेदौ व्यवस्थितौ ॥ ४४७ ॥

### प्रकृतिश्चेत्यादि सूत्रार्थ विवरणम्

उपादानं हि प्रकृतिर्निमित्तं ब्रह्मकेवलम् ।
दृष्टान्तानुपरोधाच्च मृदादिवदिहेष्यते ॥ ४४८ ॥

तथाभिद्योपदेशाच्च प्रकृतित्वं विचार्यते ।
प्रकृतित्वं च कर्तृत्वं ब्रह्मणोवाक्यगौरवात् ॥ ४४९ ॥
साक्षादप्युभयाम्नानात्प्रकृतिः कर्तृ च श्रुतम् ।
योनिश्च हीति सूत्रेण ब्रह्मणो निश्चितं पुनः ॥ ४५० ॥
कर्तृत्वं प्रकृतित्वं च योनिशब्देन तत्तथा ।
परिणामादात्मकृतेरात्मानं स्वयमित्यतः ॥ ४५१ ॥
प्रकृतित्वं च कर्तृत्वं सिद्धं तस्मात् परस्य हि ।

### एतेन सर्वे इत्यादि सूत्रार्थः

एतेन सर्वे व्याख्याता व्याख्याता इति सूत्रतः ॥ ४५२ ॥
एतैश्च हेतुभिस्सर्वे वेदान्ता ब्रह्मतत्पराः ।
तद्ब्रह्म हृदये धार्यं प्रतिसूत्रं व्यवस्थितम् ॥ ४५३ ॥
एतदैश्वर्यविभवं लिङ्गं ब्रह्म हृदम्बुजे ।
सामरस्यविधानेन धार्यं पूज्यं मुमुक्षुभिः ॥ ४५४ ॥
तस्मात्सर्वप्रयत्नेन सर्वकर्माणि मानवः ।
परिवृत्य यथाकालं करपीठे तु पूजयेत् ॥ ४५५ ॥
यतः पापार्णवात्त्रातुं भक्तिर्नौरिव निर्मिता ।
तस्माद्भक्त्युपपन्नस्य रजसा तमसा च किम् ॥ ४५६ ॥
अन्त्यजो वाधमो वापि मूर्खो वा पतितोऽपि वा ।
शिवभावं प्रपन्नश्चेत् पूज्यः सर्वसुरासुरैः ॥ ४५७ ॥
तस्मात्सर्वप्रयत्नेन हृदये धारयेच्छिवम् ।
अभक्तानां क्वचिदपि फलं नास्ति यतस्ततः ॥ ४५८ ॥

वेदैश्शस्त्रैर्वेदविद्भिर्विचार्यार्थ सुनिश्चितम् ।
ब्रह्मघ्नो वा सुरापो वा स्तेयी वा गुरुतल्पगः ॥ ४५९ ॥

मातृहा पितृहा वापि वीरहा भ्रूणहापि वा ।
सम्पूज्यामन्त्रकं भक्त्या शिवलिङ्गं परात्परम् ॥ ४६० ॥

तैस्तैःपापैः प्रमुच्येत सामरस्यमना यदि ।
तस्मात्सर्वप्रयत्नेन पतितोऽपि यजेच्छिवम् ॥ ४६१ ॥

भक्तश्चेन्नपरः कश्चित् भिक्षाहारो जितेन्द्रियः ।
कृत्वापि सुमहत्पापं भक्त्या पञ्चाक्षरेण तु ॥ ४६२ ॥

पूजयेद्यदि तल्लिङ्गं तस्मात्पापात्प्रमुच्यते ।
अब्भक्षा वायुभक्षाश्च येचान्ये व्रतकर्शिताः ॥ ४६३ ॥

तेषामेतैर्व्रतैर्नास्ति शिवलोकसमागमः ।
भक्त्या पञ्चाक्षरेणैव यो लिङ्गं सकृदर्चयेत् ॥ ४६४ ॥

सोऽपि गच्छेत् शिवस्थानं शिवलिङ्गस्य धारणात् ।
तस्मात्तपांसि यज्ञाश्च सर्वे सर्वस्व दक्षिणा ॥ ४६५ ॥

शिवलिङ्गार्चनस्यैते कोट्यंशेनापि नो समाः ।
अरुद्रो वा सरुद्रो वा शिवलिङ्गं समर्चयेत् ॥ ४६६ ॥

यः सकृत्पतितो वापि मूढो वा मुच्यते नरः ।
षडक्षरेण वा नित्यं तथा पञ्चाक्षरेण वा ॥ ४६७ ॥

एककाल द्विकालं वा त्रिकालं सर्वदाथवा ।
येऽर्चयन्ति महादेवं विज्ञेयास्ते गणेश्वराः ॥ ४६८ ॥

जातेनात्मद्रुहा येन नार्चन्ति लिङ्गमैश्वरम् ।
स चिरं सञ्चरत्यस्मिन् संसारे दुःखसागरे ॥ ४६९ ॥
दुर्लभं प्राप्य मानुष्यं तल्लिङ्गं यो न धारयेत् ।
निष्फलं तस्य तज्जन्म मोक्षाय न भवेद्यतः ॥ ४७० ॥
हृत्प्रदेशे सदा धार्यं शिवलिङ्गं मनीषिभिः
दुर्लभं प्राप्य मानुष्यं यो लिङ्गं हृदि धारयेत् ॥ ४७१ ॥
तस्यैव सफलं जन्म कृतार्थः स नरोत्तमः ।
लिङ्गाङ्गसम्भवा ये च शिवलिङ्गैक तत्पराः ॥ ४७२ ॥
शिवलिङ्गार्चनपरा न ते दुःखस्य भागिनः ।
ये वाच्छन्ति महाभोगान् राज्यं च त्रिदशालयम् ॥ ४७३ ॥
तेऽर्चयन्ति सदाकालं हृदिस्थं लिङ्गमद्भुतम् ।
सौभाग्यं कान्तिमद्रूपं सत्यं त्यगः प्रभावता ॥ ४७४ ॥
शौर्यं च जगति ख्यातिर्लिङ्गमर्चयतो भवेत् ।
तस्मात्सर्वं परित्यज्य शिवैकाहितमानसः ॥ ४७५ ॥
सामरस्यविधिं कुर्यात् यदीच्छेच्छिवमात्मनः ।
सङ्ग्रहेण प्रमाणानि पुराणेष्वागमेषु च ॥ ४७६ ॥
अन्विष्य लिखितान्येतान्येतस्य विषये पुनः ।
पौनरुक्त्यमनादृत्य बुद्धिदार्ढ्याय सादरम् ॥ ४७७ ॥

प्रथमाध्यायस्य चतुर्थः पादः समाप्तः

**श्री जगद्गुरु उज्जयिनी सद्धर्मसिंहासनमहासंस्थानस्य ज्ञानगुरु-विद्यापीठाश्रये प्रकाशिताः ग्रन्थाः**

वे. ब्रं. लिं॥ डमद्दिगी शङ्करशास्त्रि विरचित ग्रन्थाः ।

१. सिद्धान्तशिखोपनिषत् वीरशैवभाष्यम्
२. ईशावास्योपनिषत् शाङ्करीव्याख्या
३. केनोपनिषत् ,,
४. मुण्डकोपनिषत् वीरशैवभाष्यम्
५. ब्रह्मसूत्रवृत्तिः (प्रथमोध्यायः)
६. श्रीकरभाष्यम् (चतुस्सूत्री—कन्नडभावार्थोपेता)
७. वीरशैवसिद्धान्तसुधाकरः ।
८. ब्रह्मोपदेशविधिः ।
९. शिवार्चनचन्द्रिका ।
१०. सद्धर्मज्योतिः ।
११. सिद्धलिङ्गशतकम् ।
१२. सिद्धलिङ्गशिवयोगिचरितम् ।
१३. श्री जगद्गुरु रेणुकगीता । (आंग्लभाषानुवादसहिता)

१. श्री जगद्गुरु महासंस्थानमठः ।
२. उज्जयिनीमठः—चित्रदुर्गः ।
३. शङ्करविलास संस्कृतपाठशाला, मैसूरु